अपुरस्तात्स्तोभानि च बर्हिर्निधनानि च[1] ।
पुरस्तात्स्तोभानि च पदनिधनानि ।
[अथोभयतो बार्हतानि च ।][2]
अथोभयतो[3] राथन्तराणि चोभयतो[4][5] बार्हतानि[6] ।[7]
5 अपुरस्तात्स्तोभानि[9] पदनिधनानि गुरुगीतीनि[10] ।
पुरस्तात्स्तोभानि[11] बर्हिर्निधनानि लघुगीतीनीति[12] ।
गीत्यैतानि विजिज्ञासेतेति[13] शाण्डिल्यायनः[14] ।
यानि लघुगीतीनि तानि[15] राथन्तराणि ।
यानि गुरुगीतीनि तानि[15] बार्हतानि[16] ।
10 अपि[16] वा[17] यानि[18] प्रण्यस्तगीतीनि[19] तानि राथन्तराणि ।
यान्युदात्तगीतीनि[20] तानि बार्हतानीति[21] ।
कल्पेनैव[22] यज्ञकामा[23] व्याख्याताः ।
यथैतत् स्वर्गकाम[24]यज्ञः पशुकाम[24]यज्ञः प्रजापति[25]काम[24]यज्ञोऽभिचरणीय इति ।
अथाप्याहुः[26]—ऊर्ध्वार्थ एव खल्वयं भवति ।
15 तं[27] नु खल्वर्थं श्रेम्णोऽन्येऽर्था[28] अन्ववयन्तीति[29] ।
आप्तकामाः[30] स्विद् देवाः[31] स्तूयन्ता३ अनाप्तकामा[32] इति ।
अनाप्तकामा इति वै खल्वाहुः ।
को ह्याप्तकामस्य स्तुत्या[33] कः प्रत्यर्थो[34] भवतीति[35] ।
अथाप्याहुः—शश्वदङ्गाप्तकामा एव भवन्ति ।
20 तत्प्रवादेन[36] जानीमः ।
यस्मै देवा कामयन्ते तस्मै समर्धयन्ति ।
कुतो[37]ऽनाप्तकामाः समर्धयिष्यन्तीति[38] ।
अथापीहैवं[39] पश्याम आप्तकामतराणा[40]मेवानाप्तकामैरिप्साम् ।

1 Wanting in B. 2 Wanting in B, G1, G2. 3 ०भवतेति G1. 4 वोभवतो G1. 5 ०य तानि B. 6 G1, G2 add च. 7 Wanting in C. 8 अ is wanting in C. 9 C, G1, G2 add च. 10 ०तानि G1. 11 स्तात् is wanting in G2. 12 गीतीनी G1, G2; C omits इति गीत्या. 13 ति is wanting in B, G2. 14 ०नौ B. 15 तानि wanting in C. 16 नि wanting in G1, G2. 17 Wanting in G1, G2. 18 C omits वा. 19 उदात्तगी C क. 20 ०न्यनुदात्त०·C क. 21 बार्हगीतीनि G1, G2 ( see p. 25 note 18 ). 22 C ख, J, K resume from here. 23 ०काम्या G1, G2, J, K. 24 ०कामो० C. 25 प is wanting in B. 26 अप्याहु० C. 27 तं नु is wanting in C. 28 श्रेयः प्रेम्णोऽन्ये० B; श्रोमोन्ये० G1, G2; श्रोम्ला-न्ये० J, K. 29 ०वर्यतीति G1. 30 ०कालमा० J, K; 31 देवा श्रूयन्ता C. 32 अवाप्त० J, K. 33 सुत्या C. 34 ०त्या० G1, G2, J, K. 35 भविलतीति C; भविष्य-तीति G1, G2, J, K. 36 ०प्रत्यवा० C. 37 क्रुतो C. 38 ०यिष्यन्निति C, G1, G2, J, K. 39 ०हैव C, G1, G2, J, K. 40 ०णामनाम० C, G1, G2, J, K.

यथैतद्ब्राह्मामिति ।
अथाप्यल्पकाम[1]मवदायाह—"विश्वेभ्यो देवेभ्यः स्वाहा" इति । VS. 22. 28; 39. 13.
कुतोऽन्नास्[2]तकामान् प्रतिव्य[3]भविष्यदिति ।
5 अथाप्याहुः—द्विस्थाना[4] देवा भवन्ति ।
न्यूनम[5]न्यत्स्थानं सम्पू[6]र्णमन्यत् ।
यदु ह न्यूनं तदि[7]हं प्रत्नै[8]ः प्रतिविभवन्ति ।
यदु सम्पूर्णं तत[9] आशिषः समर्धयन्[10]तीति ॥ ३ ॥
कथं[11] खल्वङ्गकामा इति ।
10 विद्यन्त इत्येके ।
श्रुतिप्रमाणाः ।
अङ्गे श्रूयमाणं[12] कथं क्रतौ प्रतीयामे[13]ति ।
अथापि योऽङ्गकामं क्रतु[14]कामं म[15]न्येतापि नून[16]ꣳ सोऽङ्गे दुष्टे सर्वमेवापि क्रतुं दुष्टं मन्येत ।
15 अथा[17]पि पृष्ठहोमꣳ सर्वेषां स्तोत्राणां मन्येतेति[18] ।
क्रतुकाम इत्यपरम् ।
क्रतुः खल्वधिकृतोऽङ्गैश्च कामैश्च भवति ।
अथापि न आर्षेय[19]कल्पो दर्शयति—यज्जातीया प्रतिपद् भवति तज्जातीयानि द्रव्याणि कल्पयति ।
20 यथा[20] ज्योगामयाविनो[21] वर्षकामस्य जन्या[22] गा विवित्[23]समानस्येति[24] ।
अथापि योऽङ्गे[25] कामं मन्येतापि नूनꣳ स तदेवाङ्गं कृत्वा विरमेत्, त[26]स्मिन् हि[26] सकामो भवतीति ।
यद्वेतदङ्ग[27]दोषात् क्रतुदोष इति, विषये खलु दोषो भवति न तथाकामः ।
यद्वेतत्पृष्ठहोमꣳ सर्वेषाꣳ स्तोत्राणां मन्येतेति, भ[28]वन्ति वाङ्गधर्मा यथा युग्य[29]स्य घास[30]दानमक्तस्योपाञ्जनमिति ।
25

1 ०कामपदाय B. 2 ०वास्त० G1, J, K. 3 प्रतिभवि० C, J, K. 4 ०न B. 5 म is wanting in J. 6 पूर्वम० B. 7 ०दितः C, G1, G2, J, K. 8 प्रयत्नैः B. 9 ततश्चाशिषः C. 10 ०र्द्धतीति J. 11 कथमु C, G1, G2, K; अथमु J. 12 ०माणां C. 13 प्रतियामेत G1, G2, J, K. 14 क्रतुं कामयेता० C. 15 म wanting in G1, J. 16 मन्येसो० G1, G2; मन्यꣳसो० J, K. 17 अथोपि J. 18 मन्यन्त इति B. 19 ०काल्पो G1, G2; ०र्षेकाल्पो J. 20 यथो G1, J. 21 ०ने G1, G2, J, K. 22 जन्य्यामाविधित्समान० C. 23 विवत्स० B; विविमान० G1. 24 ०न्य० K. 25 योग का० G1, G2, J, K. 26 तन्हिस्मि G1, G2, J. 27 ०दतंदो० J, K. 28 ०ति B. 29 ०ग्म० K. 30 चासा० B; दाव्वासदाममक्तस्यो० G1.

सम्भूय तु खल्वर्थान् सांधयन्तीति[1] ।
कथमु ब्रह्मसाम्नि कामागानमिति ।
याथाकामी कामानामित्येक आहुः ।
अनादेशे किमन्यद् याथाकाम्यात् प्रतीयामः[2] ।
5 अथापि रहस्यब्राह्मणं[3] दर्शयति—याथाकामीति[4] याथाकामानामिति ।
क्रतुकाम इत्यपरम् ।
एषोऽधिकृतः ।
अथापि यः क्रतुकामेऽधिकृते सत्यन्यं[5] काममुत्पादयेदपि नून स पशुना तृतीयसवने चरन्तीत्य[6]न्यं पशुमुत्पादयेत् ।
10 ओमिति[7] सति समर्यादपेयात्[8] ।
यद्युपैतमेव[9] प्रतीयाद्यः[10] प्रातःसवने[11] संदशं[12] व्याहन्यात् ।
यद्वेतदनादेश[13] इति, आदेशजातिरेषा भवति यदधिकारः[14] ।
यद्वेतद्रहस्यब्राह्मणं[15] दर्शयतीति, सर्वाभिप्राय एतदुपपद्यते ।
कथमु खल्वाशीःसमृद्धिरुपसरणानीति[16] ।
15 सर्वस्तोत्रेष्वित्येक आहुः ।
स्तोत्रशब्देन[17] चाभिश्रावयति[18] ।
अपि चानिर्देशे किमर्थोऽवयवं प्रतीयादिति ।
ब्रह्मसाम्नीत्यपरम् ।
ब्रह्मसाम[19] ह्याशीःस्थानमिति[20] ।
20 अथापि यः स्तोत्रशब्दान्नाऽस्तोत्रीये[21] प्रतीयादाशीश्शब्दादपि स नाऽब्रह्मसाम्नि प्रत्येतुमर्हतीति ॥ ४ ॥
अथातो यज्ञस्थानानि ।
अपिच सन्धियज्ञा इत्याचक्षते ।
अहोरात्राभीज्याऽग्निहोत्रम् ।

1 श्यादय० G1; सादय० G2, J, K. 2 ०म C, G1, G2, J. 3 ०णे C, G1, G2, J, K. 4 याथाकामिन्वा[illegible]िवका० G1, G2, K; याः थामित्वमिवका० J; ०कामी कामा० is suggested here. 5 सत्यं न्यं G1, G2, J, K. 6 चरती० is suggested. 7 एदामि० B. 8 समानादपेयात् G1 G2; समानादयेयात् J. 9 ०द्युवैत० C, G1, G2, J, K. 10 प्रतियाद्याः J. 11 प्रति० C; प्रतेः० G2, J but a second hand in G2 corrects it. 12 स्व० B. 13 ०द्वेत्वद० G1; ०द्वेवद० J. 14 C adds तद्. 15 ०णे C, G1, G2, J, K. 16 स wanting in K. 17 स्तोत्रे श० B; स्तोत्रब्देन J. 18 च न हि स्तावयति C; च हि श्रावस्तावायति G1, G2; च ह्रि श्रावयति J, K. 19 ०सामा G1. 20 ०शीर्द्धान० C, G1, G2, J, K. 21 ०ना-स्तोत्रे C; ०ना स्तोत्रे G1, G2, J, K.

सायमाहुत्या रात्रि[1]मभियजते ।
सा यत्र क्व च पुरोदयाद्धू[2]यते स्वे स्थाने जुहोमीति विद्यात् ।[3]
प्रातराहुत्याऽहः ।
5 सा यत्र क्व च पुराऽस्तमयाद्धू[4]यते स्वे स्थाने जुहोमीति विद्यात् ।
ते तु यदादौ निदधाति प्राप्तश्च होमकालः ।
अपिचैवं[5] कृत्स्ने अहोरात्रे अभीष्टे भवत इति पूर्वपक्षापरपक्षाभीज्या[6] ।
दर्शपू[7]र्णमासौ ।
पौर्णमासेन[8] हविषाऽपरपक्षमभि[9]यजते ।
10 स यत्र क्व च पुराऽमावास्य[10]या यजेत स्वे[11] स्थाने यजे[12] इति विद्यात् ।[13]
आमावस्येन पूर्वपक्षम् ।
स यत्र क्व च पुरा पौर्णमास्या यजेत स्वे स्थाने यज इति विद्यात् ।
तौ[14] तु यदादौ निदधाति प्राप्तश्च य[15]ज्ञकालः ।
अपिचैवं[16] कृत्स्नौ पक्षावभीष्टौ भवत इति ऋ[17]त्वभीज्या ।
15 चातुर्मास्यान्योषधि[18] भ[19]क्त्यभीज्या ।
आग्रयणेष्टी उदगयनदक्षिणायनयोः, पशु[20]सोमः, तस्य संवत्सरस्याभीज्या सुत्येति ।
तत्खल्वेतत् सकृत्प्रयुक्तमाहिताग्नेः कुशलेन य[21]दग्निहोत्रं[22] दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टी पशु[23]सोम इति[24] तु यदेवं न करोति ग्लावयज्यौ[25] स्यादिति ।
20 [ अननुभूतिज९ स्यौ[26]दिति । ][27]

---

1 ०त्रमभिजयते B; ०त्रिमपि य० G1; ०त्रिं यज० J, K. 2 ०द्धूयेत C, G1, G2; द्धूयेत J, K. 3 J, K add स यत्र पुरामावास्यया यजत स्वे स्थाने यजत इति विद्यात् ( See line 12 ). 4 ०द्धूयेत C, G1, J, K. 5 ०चैनं C. 6 C क reads ०भीष्टा for ०भीज्या here and in the following lines. 7 ०पौर्ण० C, G1, G2, J, K. 8 ०सेव G1. 9 ०ंभिजयते B; ०भियाजता J; ०यजेते K. 10 ०स्या C. 11 स्व G1, G2. 12 यजत C. 13 J, K omit this sūtra and the next two. 14 ते J. 15 होमकालः C क. 16 अपिवैषं C. 17 उक्ताभीष्टा C; ऋत्वगभीज्या B. 18 ०धिं B. 19 ऋत्वगभीज्या B; पक्यभिज्या G1, G2. 20 पशुस्सोमः B; पशुसमः C क; पशूसमः G1, G2, J, K. 21 यददग्नि० G1, G2, J. 22 ०त्रपूर्ण० B. 23 पशुसोम इति तु is wanting in C क; पशुसोम इति वै स्त्रं यदे० C ख; पशू (०शुः० J; ०शु० K ) सोम इति वै स तु यदे० G1, G2, K. 24 J adds वै स. 25 ग्लायदिज्या९ स्या०C; ग्लायज्जु९ स्या० G1, G2, J, K. 26 स्योदि० J. 27 Wanting in B.

अ[1]सिद्धिदर्शी वा स्यात् ।
मू[2]लिपुरोडाशेनाप्नोति ।
आज्येन पयसा च प्राणि[3]ति ।
अथाप्याहुः—आदित्यश्च वाँ[4]व खलु चन्द्रमाँ[5]श्चेमानि पर्वाणि कुरु[6]तो ययोरियमभीज्या भँ[7]वतीति ।
5
अग्निहोत्रेर्णा[8]दित्यस्येज्यामभियजते ।
दर्[9]शपूर्णमासाभ्यां चन्द्रमसः ।
तदग्निहोत्रꣳ साँयमाहुत्या प्रयुज्यते, प्रातराहुत्या निस्तिष्ठते ।
सोऽपि नाहुत्वा प्रातराहुतिमन्यं यज्ञमुपक्रमते ।
10 कथं पूर्वस्मिन्न निति[10]ष्ठतेऽन्यमुपक्रामेतेति[11] ।
पौर्णमासेन हविषा दर्शपूर्णमासौ प्रयुज्येते[12] ।
[13]आमावास्येन निस्तिष्ठते[14] ।
सोऽपि नानिष्ट्वा[15]ऽऽमावास्येन हविषाऽन्यं यज्ञमुपक्रमते ।
कथं पूर्वस्मिन्न निति[16]ष्ठतेऽन्यमुपक्रामेतेति[17] ॥ ५ ॥
15 तदप्यपरपक्षे प्रायणं परिजिहीर्षितं भवति । PS. 2. 7. 1.
रात्रौ वा । PS. 2. 7. 2.
य[18]ज्ञविलोपो वि[19]सꣳस्थिते । PS. 2. 7. 3.
अपि च[20] नोह तमस एव तम इ[21]यादिति । cp. PS. 2. 7. 4.
तच्चेदपरपक्षे प्रायणꣳ शङ्केत[22] । PS. 2. 7. 5.
20 याव[23]त्योऽपरपक्षस्या[24]तिशिष्टा[25] रात्रयः स्युस्तासाꣳ सायं प्रातराहुतीः प्रतिसङ्ख्याय हुत्वा[26] प्रत्याहृ[27]त्याऽऽमावास्येन[28] हविषेष्ट्वा समापयेयुः । ibid.
एवमय[29]ज्ञविलोप इति ।[30]
पूर्वपक्षे चेद् रात्रौ प्रातराहुतिमेव । PS. 2. 7. 6.

1 सिद्धि० C, G1, G2; सिद्ध० J. 2 मूलः पु० B. 3 प्राणीति C, G1, G2, J; प्रणीति K. 4 वावस्व G1, G2; वांव स्व J, K. 5 ०माग्निश्चे० C. 6 कुरुते G1, G2, J, K. 7 भीति G1, G2, J. 8 ०णहादि B; ०णाहादि० G1, G2, K; ०णादादि J. 9 After सा both the mss. G1, G2 break off. 10 निष्ठिते० B, C; 11 क्रमेयेतेति B; ०मयेति J, K. 12 ०ज्यते J, K. 13 अमा B. 14 ०ते C, J, K. 15 ०निष्ठा० J. 16 ०न्ननिस्तिष्ठिते० B; ०न्ननिस्तिष्ठते० C; ०न्नमितिष्ठतेनिन्य० J. 17 ०क्रमेयेति B; ०क्रमयेति J, K. 18 ०विलोपौ B; ०विभोयो J. 19 वि is wanting in J. 20 चान्यस्त० PS. 21 इयात् PS. 22 शङ्कयेत PS. It does not end the sūtra here. 23 ०त्यापर० J. 24 ०क्षाति० PS. 25 ०ष्ट J. 26 ०त्या J. 27 ०हु० J. 28 ०स्ये J. 29 एवं यज्ञ० C, J. 30 Wanting in PS; Hultzch's ms. of PS. ( ie. H. PS. ) contains it.

पुरस्तादाहवनीयं हरेयुः । PS. 2. 7. 7; cp. LŚ. 8. 8. 16.
पश्चाद् गार्हपत्यम् । PS. 2 7. 8; cp. LŚ. 8. 8. 16.
दक्षिणतो दक्षिणाग्निम् । ibid.
मध्ये शरीरम् । PS. 2. 7. 9.
5 तं दक्षिणाशिरसं[1] चितावाहितं[2] यज्ञपात्रैः कल्पयेत्[3] । PS. 2. 7. 10, 11; LŚ. 8. 8. 17. cp. ŚBr. 12. 5. 2. 7 up to p. 32. 4.
अध्वर्युः शिरसि कपालानि युञ्ज्यात् । PS. 2. 7. 12; LŚ. 8. 8. 18.
समवत्तधानं[4] च चमसम्[5] । PS. 2. 7. 13; cp. LŚ. 8. 8. 19.
ललाटे प्राशित्रहरणम् । PS. 2. 7. 14; LŚ. 8. 8. 20.
10 नासिकयोः स्रुवौ[6] कर्णयोर्वौ[7] । PS. 2. 7. 15; cp. LŚ. 8. 8. 21.
आस्ये हिरण्यमवधार्या[8]ऽनुस्तरणिकया[9] गोर्वपया[10] मुखं प्रच्छाद्य तत्राग्निहोत्रहवणीं[11][12] तिरश्चीम् । PS. 2. 7. 16-18; LŚ. 8. 8. 22.
दक्षिणौ पाणौ जुहूम् । PS. 2. 7. 19; LŚ. 8. 8. 23.
सव्य उपभृतम् । PS. 2. 7. 20; LŚ. 8 8. 24.
15 पार्श्वयोः स्फ्योपवेषौ[13] ।[14] PS. 2. 7. 21; cp. LŚ. 8. 8. 25.
तथा वृक्यौ[15] यथास्वम्[16] । PS. 2. 7. 22; LŚ. 8. 8. 25.
उरसि ध्रुवाम् । PS. 2. 7. 23; LŚ. 8. 8. 26.
उदरे[17] पात्रीम् । PS. 2. 7. 24; LŚ. 8. 8. 27.
उपस्थे कृष्णाजिनम् । PS. 2. 7. 25; LŚ. 8. 8. 28.
20 अन्तरेण[18] सक्थिनी[19] शम्यां[20] दृषदुपले[21] यच्च नादेक्ष्याम[22]ः । PS. 2. 7. 26, 27; LŚ. 8. 3. 29.
दक्षिणस्योखस्य दक्षिणतं[23] उलूखलम् । PS. 2. 7. 28; LŚ. 8. 8. 30.
अनुसक्थि[24] मुसलम् । PS. 2. 7. 29; cp. LŚ. 8. 8. 31.
पादयोः[25] शकटशूर्पे[26] । PS. 2. 7. 30; cp. LŚ. 8. 8. 32.

---

1 PS. breaks the sūtra here. 2 चितायां वाहितं C, J, PS. 3 कल्पयति PS. 4 Wanting in LŚ. 5 समन्त० C; समत्त० J; समोप्तधानं LŚ. 6 स्रुचौ C. 7 कर्णवा J; wanting in LŚ. 8 ०र्० J, K. 9 PS. breaks the sūtra at ०धाय. 10 ०णे J. 11 गौमुखं वपया LŚ. 12 ०णिं B. 13 स्फ्या० J; स्फो० K. 14 Wanting in LŚ. 15 वृक्कौ C; पक्कौ J; पृक्कौ K. 16 यथात्वम् J; wanting in LŚ. 17 उदस्थे J; उदरस्थे K. 18 अन्त्रेण J. 19 शच्छीनि J; सक्थी K; सक्थ्णी LŚ. 20 शम्या दृ० C शम्यादृ० J, K, PS. 21 H. PS adds च; PS, H. PS break the sūtra here. 22 नादेष्यामः PS. 23 ०क्षिण B, J. 24 ०क्थं LŚ. 25 J repeats here the portion शम्या दृषदुपले ··· पादयोः. 26 शंकुशूर्पे K; ०शूर्पौ H. PS; सूर्पम् LŚ.

सर्वाण्युत्तानान्यासेचनवन्ति[1] पृषदाज्येन[2] पूरयित्वा । PS. 2. 7. 31, 32; cp. LŚ. 8. 8. 33.

अथैनं[3] यथास्थानं युगपदग्निभिरुपसृजेत् । cp. PS. 2. 7. 33; LŚ. ibid.

सर्वस्वारिकं[4] परिणाणम्[5] । PS. 2. 7. 34.

5 "स एष यज्ञायुधी यजमानः स्वर्गलोकमेति"[6] इति ब्राह्मणं भवति[7] । PS. 2. 7. 35; ŚB. 12. 5. 2, 8.

"आहुतिं जुहोति पुत्रो भ्राता यो[8] वान्यो[9] यज्ञियो ब्राह्मणः—

'तस्मात्त्वमधिजातोऽसि[10] त्वदयं जायतां पुनः ।'

'असौ स्वर्गाय लोकाय स्वाहा ॥'"[11] इति । PS. 2. 7. 36; ŚB. 12. 5. 2. 15.

10 शान्तिर्वामदेव्यम्[11] ॥ ६ ॥ PS. 2. 7. 37.

पञ्चमः[12] पटलः

एकहिङ्कारं[13] बहिष्पवमानꣳ साम्नश्चैकत्वात् ।

15 छन्दसश्चेत्याचार्याः[14] ।

साम्नामनु नानात्वम्[15] ।

उत्तरयोः पवमानयोः पृथग्घिङ्कारा भवन्ति ।

पर्यायाणामनु नानात्वम्[16] ।

आवर्तिषु[17] सन्धौ विप्रतिपद्यन्ते ।

20 एकहिङ्कार इत्येके ।

यथा बहिष्पवमानं त्रिराचार्या हिङ्कुर्वन्ति ।

देवतानामनु नानात्वम् ।

विश्वजितोऽपि[18] वा[19] नानादेवतं बहिष्पवमानम ।

अथाप्यत्र[20] सकृद्धिङ्करोति सकृद्धिङ्कृतोत्पादत्वाद् बहिष्पवमानस्येत्याचार्याः ।

25 अथ यज्ञायज्ञीयानुरूपे कथꣳ हिङ्कार इति ।

यथोत्तरयोः पवमानयोरित्येके ।

अस्ति हि सामनानात्वम् ।

यथा वा विश्वजिति नानादेवतं[21] इति ।

सकृद्धिङ्करोति सकृद्धिङ्कृतोत्पादत्वाद्[22] बहिष्पवमानस्य, तथा वा स्यादिति ।

---

1 ०ति न J, K. 2 पृजदा० PS. 3 अथैनान् PS. 4 सर्वास्थानिकं C; ०सारिकं J, ०स्वारं H. PS. 5 ०माणम् C; ०गपा॰ J; ०गानम् PS. 6 ति C. 7 ०तीति H. PS. 8 ०थो C. 9 वाशो J; वा H. PS. 10 त्वस्मा० C, J, K. 11 C, J, K, PS, H. PS. repeat it 12 In B only. 13 एका J, K. 14 छा० B. 15 नात्व० J. 16 नात्व० B, J. 17 ०वृत्ति C क. 18 ०तो वा C, J, K. 19 ना J; wanting in K. 20 अथात्र C, J, K. 21 ०ते सति । C, K. 22 ०त्पादात् B.

अथ योनौ यज्ञं तन्वानस्य[1] कथं[2] रेतस्यारथन्तरवर्णे[3][4] स्यातामिति ।
उभे यथास्थानं स्यातामिति ।
बहिष्पवमाने चोत्पन्ने भवतः ।
न चापि[6] निर्वर्तयति ।
5 अथापि यथा गायत्रं यज्ञायज्ञीयधर्मान् प्रतिपद्यते[8] एवमपि यज्ञायज्ञीयं[7] गायत्रधर्मान् प्रतिपद्येत ।
बहिष्पवमान[9] एष धर्मो भवतीत्यपरम् ।
नान्यत्र[10] गायत्राच्च चान्यत्र बहिष्पवमानादिति ॥ ७ ॥
अथ[11] गायत्रस्य काम्याः सामान्ताः ।
10 यावन्निगदं स्युरित्येके ।
स्वरस्यैते[12] प्रत्याम्नाया भवन्ति ।
तत्र किमर्थोऽवयवं प्रतीयादिति ।
[ अथाप्येवमव्याहतं[13] गायत्रं भवति ।
अथापि यथा[14] काम्यस्याविप्रयोगस्तत्कुशलम् ।
15 अथाप्येष प्रयोगाणां धर्मो येन प्रक्रमैस्तेन[15] समाप्तिरिति ।
बहिष्पवमान इत्यपरम् ।
एतद् गायत्रस्य विकारस्थानम् ।
अथाप्येतद् धुरां[16] सामान्ता[17] नातियन्ति । ]
अथाप्येवमजामि भवति ।
20 अथाप्येवं यथाभूयिष्ठं भवतीति ।
प्रथमायामिति वार्षगण्यः[18] ।
एतद्बहिष्पवमानस्याशीःस्थानम्[19][20] ।
अत्र हि काम्याः प्रतिषदो भवन्तीति ।
रथन्तरवर्णायामित्यपरम् ।
25 एषा च विकृततमा ।
अपि च पथ्यप्रक्रमं[21] पथ्यावसानं भविष्यतीति ।
ब्रह्मण[22] आज्य इत्यपरम् ।

1 तत्वानानस्य J, K. 2 कथन्त C, J. 3 रेवर्णे J. 4 ०य० C. 5 ०रधर्मे B. 6 चातिनि० B; चापि निवर्त० C, J, K. 7 यज्ञीयं J. 8 पद्यत G1, G2. G1, G2 resume from here. ( see p. 30 note 9 ). 9 C, G1, G2, J add गायत्रस्य. 10 वान्य० C. 11 Wanting in C, G1, J. 12 ०स्येमे C, G1, G2, J, K. 13 B omits the portion within brackets. 14 याथा० C. 15 प्रक्रमेरन् J, K. 16 धरा० G1. 17 ०माना J, K. 18 यार्ष० G1. 19 एतत्पव० B. 20 ०शीर्द्धानम् C, G1, G2, J, K. 21 पथ्य० G1. 22 ब्र० K.

ब्रह्मसाम ह्या[1]शीःस्था[2]नमिति ।
उत्तरयोः पवमानयोरित्यपरम् ।
एतदेते[3]षाꣳ सामा[4]न्तानाꣳ स्थानम् ।
अथाप्येवꣳ रोहो भवति
5 अपि चान्ताख्यानि कर्माणीति ।
यद्वेतज्जामीत्यजामि वा कल्पयेत, अर्थो[5]ऽजामिकरण इति वापि तितिक्षेत ।
अनृ[6]च्येके गायत्रं गायन्ति ।
कस्य हेतोरिति[7] ।
स्वरायैतत् स्थानं कुर्वते ।
10 स न इत्थं केवलः स्वरो गीतो भविष्य[8]तीति ।
ते[9] व्याध्मत्यृचि प्रस्तुत्यानृचि गाय[10]न्ति ।
प्रतिहारस्य चानुत्सादमनुपाया[11]च्च निधनस्य चानिधनस्वरित[12]त्वान्निधनमु[13]त्सीदेदित्याचार्याः ॥ ८ ॥

अथ बृहद्रथन्तरयोर्वदति ।
15 तयोः समा[14]नं निधनमासीत् ।
तस्मिन्नातिष्ठेतामिति ।
किन्नि[15]धनमिति ।
[16]अर्हरिति कौत्सः ।
अकारमेवान्य[17]त् ।
20 सकारोपसृष्टं मेजे[18] ।
हकार[19]मन्यत् ।
सकारोपसृष्टं सकारमेव, अहमनयोः समानं निधनं मन्य इति धानञ्जय्यः ।
स [20]ह्युभयत्र दृश्यत इति ।
निधनब्राह्मणमेवाहमिदं मन्य इति वार्षगण्यः ।
25 द्वे खल्विमे पृष्ठे भवतः ।
एकं पृष्ठस्थानं तस्मिन्न स्पर्धे[21]तामहंपूर्व[22]तया इति ।

---

1 त्याशी० J. 2 ०शीर्द्धा० C, G1, G2, J, K. 3 ०देवेषा० K. 4 सामन्ता० G1, G2. 5 आमिकरण J; अर्क्ष्यो० K. 6 ०नृचोके J. 7 इति is wanting in B. 8 ०ष्यभीति G1, G2; ०ष्यसीति J, K. 9 व्या घ नृचि B; तथा प्रक्षविप्र० C; ते व्याच्चत्यृचं प्रस्तुत्यानृचि G1, G2; 10 गायन्तः C, G1, G2, J, K. 11 ०थाच्च K. 12 ०स्वरत्वान्नि० B; ०नं स्वरित्वानि० C; ०स्वरित्वान्नि० G1, G2; ०न ··· स्वान् J. 13 ०मुसीच्चदेदि० G1. 14 सामन् B. 15 ०धा० B. 16 ह० C ख, G1, G2, J; आहु० K. 17 ०न्ये C, G1, G2, J, K. 18 C, J omit मेजे ··· सकारोपसृष्टं. 19 ०मभ्यास० G1, G2. 20 फभ० G1. 21 ०र्द्धेयथामहं० G1, K; ०र्द्धेथामहं० G2; ०र्द्धेयथमहं० J. 22 ०ताया G1, G2. J, K.

अथैतेषु पुरस्ताज्जपेषु वेति ।
एतदुदस्[1]येदित्येक आहुः ।
एतानि मनसान्वीत्योद्गायेदिति हि भवतीति ।
अन्यदिदं तेभ्यो भवतीति ।
5 यथाधीतमित्याचार्याः ।
न चोदासो विज्ञायते ।
अपि चार्थस्यादूषकम् ।
अथापि संशयेऽलोपो लोपान्[2]न्यायतर इति ।
ते[3] कथं पवमानगतयोरिति ।
10 कर्तव्या इत्येके[4] ।
सामसंयुक्ता हि[5] भवन्ति[6] ।
अकर्तव्या इत्यपरम्[7] ।
स्थानसंयुक्ता हि भवन्ति ।
अथापि पवमानसा[8]मिनी अ[9]प्रधानभूते भवत इति ।
15 अथापि यद्युहैनान् पुरस्तात् स्तोत्रा[10]दकरिष्यद् व्य[11]पेता अन्यैः सामभि[12]रभ-
विष्यन्, यद्[13]नन्तरान् स्तोत्रव्यपा[14]योऽभवि[15]ष्यत् ।
एतेन वामदेव्य[16]यज्ञायज्ञीये व्याख्याते ।
बृहतः स्तोत्रोत्तमायां ब्राह्मणोक्तानां रोहाणामुत्तमं न रुह्यात्[17] इत्याचार्याः ।
Ars: K. V. 18. b; 19 a; 70 a.
20 अप्रथमा[18]यैवं ह्याह—बृहतो रोहा वृणीमहा मादा[19]यिषु वान्तौ पूर्वौ वृ[20]द्धौ
निधनोपाये च द्वितीयमत्तरं वर्धयेत् स तृतीयः ।
तदुपरिष्टात् स्तोत्रस्य प्रत्य[21]वरोहे देवं हि स युवानमृ[22]त्विजमनूचानं प्रेत-
माहुः—ए[23]नमप्रत्य[24]वरूढं परावधीदिति ॥ ९ ॥
अथ यज्ञायज्ञीय[25]स्योत्तरयोर्द्व्यक्षरेण प्रस्तौति ।

1 ०स्मेदि G1, G2, J, K. 2 लोपान्याय० G1, G2; लोपान्याय्य० K. 3 Wanting in G1, G2, J, K. 4 ०त्ये G1, G2. 5 Wanting in J, K. 6 ०ति J. 7 म्. is wanting in J, K. 8 ०साम्नी B. 9 अ is wanting in C. 10 स्तोद्व्यवत्रा० J, K. 11 व्यवेता G1, G2, J, K. 12 ०मे० J. 13 यद् द्व्यन० C; यद्व्यतंतरां G1, J यद्व्यनंतरां G1, G2, J, K. 14 ०व्यवायो० C, G1, G2, J, K. 15 ०यो न भवि० G1, G2. 16 ०देव्या० G1; वामदेतेनवामदे J. 17 रोहेत् C, G1, G2, J, K. 18 अप्रमाधायै० B; अप्रमाथायै० G1, G2, J. 19 ०मादा इषु वन्तौ B; मदायिषु० C; मदयिषु J. 20 वृ is wanting in G1. 21 वात्येव० G1; वाव० G2; व्रावराहे J. 22 ०नमस्पृ B; 23 C, G1, G2, J add बृहद्. 24 त्य is wanting in J. 25 ०ज्ञीयोत्त० B; ०ज्ञीयोस्योत्त० G1, G2, J.

यथा बृहद्रथन्तरयोः ।

तदपि शश्वद्ब्राह्मणं भवति—

तानि ह वैतानि द्वादशाक्षर[1]प्रस्तावानि ककुबुत्तराणि सामानि बृहद्रथन्तरे यज्ञायज्ञीयश्चेति ।

5 अथ खल्वाह—"यदग्निष्टोमयाज्यनृतमाह, तदन्वस्य यज्ञः स्रवति, अक्षरेणान्ततः प्रतिष्ठाप्य[2]म्" इति । PB. 8. 6. 13.

किमनृतं किमक्षर[3]मिति ।

वेत्येतदक्षरम् ।

वकारादिराकारो गकारान्त इत्येक आहुः ।

10 तस्य गकारलोपं ब्राह्मणं क्षिप[4]तीति तदर्पितमुपेयु[5]ः ।

एवं कृत्स्नेन "अक्षरेण यज्ञस्य छिद्रमपि दधाति" इति । PB. 8. 6. 13.

आर्चिकमेवैतदक्षरमित्यपरम् ।

एतस्मिन् ह्यक्षरशब्दात् प्रतियन्ति ।

15 अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति ।

द्व्यक्षरेणोत्तरयोश्चतुरक्षरेण बृहतः प्रतिहरतीति ।

न[6] स्तौभिकैः सहोपपद्यते ।

तस्माद्यदेवान्त्यमक्षरं तन्निधनमुपेयुः ।

यथाधीतमित्याचार्याः ।

20 स्वरतन्त्राण्यक्षराणि भवन्ति, स्वरान्ततामेवाक्षरस्यै[10]प्सद् ब्राह्मणमेवमवक्ष्य[11]दिति ।

अथापि बहुलैषा छान्दसी[12] वृत्तिः ।

[13]वाङ्निधनानीति चैतान्याचक्षते, वागुपा[14]यानीति च ।

यद्वेतदार्चिकमक्षरमिति, यथाधिकारमेतद् भवति, स्तौभिकस्ये[15]हाधिकारो विज्ञायते ।

25

[16]अथापि संशये प्रकृतिसविधमेव प्रत्येतव्यमिति प्रत्येतव्यमिति ॥ १० ॥

षष्ठः[17] पटलः

1 ०रा प्र० G1. 2 प्य is wanting in J, K. 3 ०रा० G1, G2. 4 श्रीयतीति B. 5 ०मुपपे० B. 6 G1 repeats here यज्ञस्य … ०तस्मि ( lines 11-13 ) within brackets. 7 तृ J. 8 प्रद्व्य० J 9 ०देदान्त्य० J. 10 ०स्ये० K. 11 ०क्ष० G1, G2. 12 ०सि B; छ० J. 13 J adds त्रि. 14 ०णा० G1, K. 15 ०स्येह्यधि० G1, G2, J, K. 16 तथा० B. 17 In B only.

अथ द्रव्यसमुद्देशः ।

राथन्तराणि रथन्तरपृष्ठेऽभिरूपाणि, बार्हतानि[1] बृहत्पृष्ठे[2], उभयविधान्यु[3]-भयसाम्नि । cp. PB. 8. 3. 7; Caland ibid.

द्रवदिडानि[4] रथन्तरपृष्ठे, ऊर्ध्वेडानि बृहत्पृष्ठे । cp. PB. 10. 12. 4.

5 अथ यत्र रथन्तरपृष्ठे बार्हतानि क्रियेरन् बृहदीप्सया[5] तानि[6] विद्यात् । cp. PB. 8. 3. 7; Say. ibid.

एवमेव बृहत्पृष्ठे[7] राथन्तराणि स्वयोनीनि[8] सर्वत्राभिरूपतराणि ।

अस्वयोनिभ्यः सामान्या[9] ऋचाम्[10], असामान्याभ्यश्छन्दसि[11] प्रथमाः सामान्या[12] इत्याचक्षते ।

10 अथ या[13] यज्ञप्रवादाः[14] [सत्रप्रवादाः][15] क्रतुप्रवादाः स्तोमप्रवादाः सर्वत्र[16] ता अभिरूपाः ।

शुक्रवत्यो[17]ऽप्रवादाः पूर्वयोः[18] पवमानयोः ।

होतृप्रवादँ हविष्प्रवादँ समिद्धवद्धोतुराज्यम् ।

हूतवन्ति पीतवन्ति[19] तृप्तवन्त्युत्तराणि ।

15 मरुत्वत्यो[20][21]प्रवादाः ऋतवत्यो[22] माध्यन्दिनीयाः ।

परिवत्यः कोशवत्यो[23] निषण्णवत्यो माध्यन्दिनीयाः[24] ।

गायत्र्यां[25] वा तत्[26] त्रिष्टुभि वा मरुत्वच्चिकीर्षितं[27] भवति ।

अथ खल्वाह—"त्रीणि सवनानां छिद्राणि, तानि तेनापिधीयन्ते" इति । PB. 7. 3. 19.

20 "कतमानि छिद्राणीति ।

पवमाना[28] अदेवतास्तुतयः, तानि छिद्राणीति ।

अथाप्यन्तरेण पवमानांश्चावर्त्तीनि[29] च हविर्भिः प्रचरन्ति[30], तानि छिद्राणीति ।" cp. Say. PB. 7. 3. 19; Caland ibid.

---

1 बार्हत्पृ० G1. 2 ०ष्ठेषु C. 3 ०धावु० C. 4 द्रवद्दृडानि B; प्रवदितानि C; द्रव्यदिडानि J, K. 5 ह is wanting in B. 6 ताभि G1, G2, J. 7 ०ष्ठेन C. 8 नीति G1, G2, J, K. 9 सामन्याक्रँ C, सामन्या J, K. 10 ऋचासोमेमन्या० G1; ऋचामसामन्या० G2; ऋचसामान्या० J; ऋचमसामन्या० K. 11 ०श्छान्दसी C, G2, J, K; ०श्छन्दसी G1. 12 सामन्या C; समन्या J, K. 13 वा B. 14 दात् B. 15 Wanting in B, K. 16 सर्वत्राभि० B. 17 ०त्योजः प्र० B. 18 B adds श्रुतकत्यो. 19 Wanting in J. 20 त्व is wanting in G1, G2, K; ०मरुयोत्यो० J. 21 ०त्यो द्युप्र० C, G1, G2, J. 22 ऋत० C, G1, G2. 23 कौश० G1, G2, K; कैश० J. 24 मध्यन्दिनान्तयाः B; माध्यदिनांतीया G1, G2; मार्ध्यदिनांनीयान्व J, K. 25 य is wanting in G1, G2, J. 26 तस्त्रि० C. 27 रु is wanting in G1. 28 पवमाना ··· प्रचरन्ति wanting in J. 29 ०याः C, G1, G2, J, K. 30 S has ०नमावृत्तीनि.

वामदे[1]व्यं मैत्रावरुणसाम सर्वत्राभिरूपम्, तदपचारे तल्लिङ्गीयां[2]श्चिकीर्षेत् ।
अथैतानि तार्[3]तीयसवनिकानि रूपाणि ।
स्वादुमत्यो मधुमत्यो मद्वत्यो ओजस्वत्यो विश्ववत्यश्चित्रवत्यः सूर्यवत्यो[4][5]
दक्षिणव[6]त्यो निह्नूतवच्च वृद्धवच्चोक्[7]थेषु ।

5 अथ नार्[8]मेधस्तोत्रीये वदति—
"ककुप् प्रथमा[8]थोष्णिगथ पुरउष्णिगनुष्टुप्" इति । PB. 8. 8. 26.
कर्[9]कुबेव प्रथमा, उष्णिग् द्वितीया, "पुरउष्णिक् तृतीया, दाशत[10]येनाध्यायेन तां बह्वृचा अधीयते—Sāy. ibid.

'युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे ।
10 इन्द्रवाहा वचोयु[11]जा ॥' इति । RV. 8. 98. 9; SV. 2. 62.
तत्र वयं चत्वार्युत्तराण्युपाहरामः 'स्व[12]र्विदा' इति ।
सानुष्टुब् भ[13]वति उपरिष्टाज्ज्योतिः" ॥ ११ ॥ Caland quotes 1.5-13 on PB. 8. 8. 26.

कथमु षोडशी ज्योतिष्टोम इति ।
15 अकर्तव्य इति शौचिवृक्षिः ।
अन्तरितो[14] ब्राह्मणसमाम्नाये[15]न, त[16]था ऋक्समाम्नायेनेति ।
कर्तव्य इति गौतमः ।
षोडशिनः स्तोत्रे [17]देयेति[18] भवतीति ।
अथापि न आर्षेयकल्पो दर्शयति[19]—
20 "द्वादशा[20]हस्य षोडशिमन्ता[21]वतिरात्रौ" इति । Ārṣ. IX. 1. a.
अथापि मन्त्रवर्णो भ[22]वति—
"त्रीणि ज्योतींषि सचते स षोडशी" इति । PB. 12. 13. 32.
त्रिरुपेतो[23] द्वादशा[24]हो भवतीति वैतद् भवति ।

---

1 ०व्यमै॰ B, J. 2 ०या० C, G1, G2, J, K. 3 तात्रीयवसवनिका G1; तार्त्रीयवसवनिका G2; तार्तीयवसवनिका J; नि is wanting in K. 4 मध्वस्वत्यो वि० C, मधत्योधस्वत्येत्यो वि० G1, G2; मध्वत्यो वि० J, K. 5 ०त्या J. 6 दक्षिणतात्यो निहूत० B; दक्षिणवद् योनिदूत० C. 7 क्थे wanting in J. 8 ०मा यो० C, G1, G2, J. 9 क वे B. 10 दाशतय्यान्तां S. 11 ववायु० J. 12 सुवर्षिदां B; सुवञ्चिदा S. 13 बृहता S. 14 ०रिते C, G1, G2, J, K. 15 ०येनेति C. 16 तथा ऋक्समाम्नायेनेति wanting in C; त समा० G1, G2; तत्समा० J, K. 17 हे० G1, G2. 18 C, G1, G2, J, K add हि. 19 ०यतीति B. 20 ०शान्तस्य B; ०शाहात्य G1, G2; ०शाहत J. K. 21 ०न्तवेतिरात्रौविति G1, G2, J. 22 G1 adds व. 23 ०पेते B. 24 ०हे B, G1, G2, J, K.

सꣳस्थाम[1]प्यस्यैतां विद्यमानां[2]ममन्यत इति गौतमः ।
एवं च रहस्यब्राह्मणे दर्शयति—अप्यने[3]न षोडशिसꣳस्थेन यजेतेति ।
नोहा[4]स्यैषा सꣳस्था विद्यत इति शाण्डिल्यः ।
अतिरात्रे तु कृ[5]ताकृतो भवति ।
5 एवमिवाध्वर्युब्राह्मणं भवति—नोक्थ्ये[6] ग्राह्यो ना[7]तिरात्रे[8] ग्राह्य इति ।
सन्धी[9] इमौ भवत इति धानञ्जय्यः ।
उदयसन्धिरसाव[10]स्तमयसन्धिरयम्[11] । Ārs. K. V. 22 b.
त[12]स्माद्यः कश्चातिरात्रः षोडशिमा[13]नेव[14] स कुशले[15]नेति ।
"तस्यैता ऋचः पञ्चविंशत्यक्षराः पञ्चपदाः पञ्चाक्षरपादाः ।
10 नवोपसर्गाक्षराणि[16], आदितस्त्रयाणां पादानां त्रीणि त्रीण्युपसर्गाक्षराणि पादा[17]न्तेषु भवन्ति ।
तेऽष्टाक्षराः सम्पद्यन्ते ।
पञ्चाक्षरावुत्तरौ, द[18]शाक्षरोपयुक्ताश्चतुस्त्रिंशदक्षराः सम्पद्यन्ते ।" Say. PB. 12. 13. 22.

15 अन्त[19]स्थास्तदुपसृष्टाः ।
केनो विद्या[20]मेति ।
इत्थꣳ ह्येव[21] वयमधीमहे ।
तथा बह्वृचा इति ब्राह्मणेनेत्याहुः—"चतुस्त्रिंशदक्षराः सꣳस्तुतो[22] भवति" इति । PB. 12. 13. 24.

20 अनुप[23]सृष्टः कनीयानिति वैतद् भवति ।
अथाप्यु[24]द्ध्रियमा[25]णेषूपसर्गाक्षरेषु नैवार्थो हीयते, न वृ[26]त्तिर्दुष्यति ।
अथापि शश्वदेना अनुपसृष्टा आथर्वणिका अधीयते[27] ।
अथापि निर्धारितानामुपसर्गाक्षराणां वदति ।

---

1 म is wanting in G1, G2, J. 2 ०नां मन्य C, G1, G2, J, K. 3 अथ तेन C. 4 ना० C, G1, G2, J, K. 5 ऋता० G1, G2, J but G2 strikes off ऋ and writes कृ above it. 6 ०क्थ्यो C ख, G2, J; नोप० C क; ०क्थ्योथ G1; G1 adds (नाहास्यैषा सꣳस्था विद्यत इति शाण्डिल्योऽतिरात्रे तु). 7 ऽति० C, G1, G2, J, K. 8 J repeats ग्राह्यो ऽतिरात्रे. 9 सन्धि B. 10 ०म० B. 11 ०रपि C; ०रये J. 12 एत० C. 13 ०शिनमा० G1, G2, K. 14 ०ने J, K. 15 ०न्येति० B. 16 ०राश्च C; 17 पदा० B. 18 दशाक्षरावेकस्ताश्च० C; दशाक्षरोवैकस्ताश्च० G1, G2, J, K, S. 19 न स्था उप० C; अतस्था उप० G1, J. 20 विद्या मे तीर्थꣳ० C, G1, G2, J. 21 ह्येतमधीमहे । J; ०ह्येतवमहीमहे । K. 22 ०स्कृतो B; ०स्तुतो G1, G2, J. 23 ०क० G1, J. 24 ०प्युध्री० C. 25 य is wanting in J, K. 26 [illegible] G1, G2, J. 27 ०न्ते G2.

"अथ[1]वा एता एकप[2]दा[3]स्त्र्यक्षरा विष्णोश्छन्दो भु[4]रिजः शक्वर्यः" इति ।
PB. 12. 13. 22.

ऽयक्षराण्य[5]पि भुरिजो भवन्तीति ।[6]

तत्रैतद् गौरीवितं गायत्रीसाम[7], आनुष्टुभम्, रात्र्या समानभागः समानभक्षो भवतीति ।

5 स यद् [8]गौरीवितं गौरीवित्य ईमा[9] ऋच[10]ः स्वयोनिं[11] कुर्वते ।

ऋषिः स्वयोनिर्भविष्यतीति[12] ।

एतेन सौभरनार्मेधे व्याख्याते, रेवती च वारवन्तीयम् ॥ १२ ॥

ज्योतिष्टोमात्पाद[13]मेके षोडशिनं ब्रुवते ।

10 तत्र चास्य ब्राह्मणमधीयते ।

अथापि कथमेवं कृत्स्नं कर्माकृत[14]मन्तरयिष्यदिति ।

"चतुर्थोत्पादं वयं तत्र चास्य ब्राह्मणमधीमहे ।" Ārṣ. K. V. 20 b.

अथाप्याह—एकविंशायतनो वा एव यत् षोडशीति ।

तदेकविंशमहर्भवति ।

15 अथा[15]प्याह—दाशतय्य ऋच[16]श्चतुरुत्तर[17]च्छन्दः, क्रमे वा एवंविधमुत्प[18]द्यते न प्रथमकृताविति ।

अह्नो भ[19]वती३ रात्रेरिति ।

अह्नो भवतीत्याहुः ।

अभु[20]ज्यं चास्य हविर्भवति ।

20 अथापि नियुक्तधर्मा भवति[21] ।

विद्धां[22]च्छिल्पवान् ग्र[23]हवान् ।

यथाहरेवं रात्रेरित्यप[24]रम् ।

रात्र्या स[25]मानभागः समानभक्षो भवतीति ।

---

1 उप वा K. 2 ०पा० B. 3 ०दा अक्ष० G1, G2. 4 भूरितः G1; भू० G2, J. 5 ०रा ह्यपि C, G1, G2, J, K. 6 B here reads एतेन सौभरना··· 7 ०सामान्या B; सामाभ्यासानु० C, G1, G2, J. 8 Wanting in C; गौरु० B; ०वतं G1. 9 मा G1, G2, J. 10 ०चोऽस्व० C, G1, G2, J, K. 11 ०योन्युरुत B. योनि कु० G1, G2, J, K. 12 ०न्ती० C. 13 ०मेव C, J; ०मैक G1. 14 ०तमितिरै- ष्यिदिति B. 15 अथाप्या G1, G2, J, K. 16 ऋचो चा० C, G1, G2, J, K. 17 ०रं C, G1, G2, J, K. 18 ०त्पा B. 19 ०वति B. 20 अहवर्जे C, G2, J; अहर्ज्जे G1. A second hand in G2 strikes off व; अहर्वर्जे K. 21 ०वती G1, G2 but the latter corrects it; ०वतीति J, K. 22 निवद्धाच्छि० C; निविद्धाच्छि० G1, G2. 23 गृह० B. 24 ०परम् G1, G2, J, K. 25 B repeats it.

तौ खल्विमौ द्वौ सन्धी भवतः ।
तयोरसौ नित्यः कृताकृतो[1]ऽयम् ।
कस्य[2] हेतोरिति ।
सार्द्धं[3] तेन रात्रिः[4] पञ्चदशविधतां लभते ।
5 कृतं पञ्चदशविधमहरिति ।
अथापि न तमुद्धृत्य पराक् स्तोत्रं रात्र्या[5]वलप्स्यत ।
कृतान्यत्रावर्तीनि[6] ।[7]
अथापि न तमुद्धृत्य तद्देवत्यं[8] स्तोत्रं रात्र्या[9]वलप्स्यत ।
कृतान्यैन्द्राणि[10] ।
10 अथापि विद्यते तस्य कालस्य स्तुतिर्नास्य विद्यते ।
[कस्मात्[11] तस्य न विद्यते ।][12]
पराङेतस्यां[13] वेलायामादित्यो भवति, नो परा[14] च स्तुतिर्विद्यते ।
उदाहरन्ति द्वे[15] च परां[16] च स्तुतिम् ।
हिरण्यस्तूपे[17] भवति—
15 'अस्थाद्देवः[18] प्रतिदोषं गृणानः' इति । RV. 1. 35. 10.
"अथ खल्वाह[19]—'शक्वरीषु षोडशिना स्तुवीत' इति । PB. 12. 13. 13; LŚ. 10. 2. 1.
तत्रैके महानाम्नीः[20] प्रतियन्ति[21] ।
एताः शक्वर्यो भवन्तीति ।
20 एतास्वेव शक्वरीप्रवादो भवतीत्यपरम् ।
एताश्चाधिकृता भवन्तीति ।" cp. Caland PB. 12. 13. 13.
ओङ्कारो विशेषश्रुतेः[22] सर्वसामसु[23] स्यादित्येके ।
स वाचा रथन्तरे[24] निवर्तेत ।
यथा त्रयस्त्रिंशं[25][26] तृतीयसवनमिति[27] ।

---

1 कृतोकृतः J. 2 करस्य J. 3 साध्यं B; रार्द्ध J. 4 रात्रि J. 5 ०त्र्या० G1, G2, J. 6 ०त्रावर्तिनि B; ०त्रावत्तीनि G1; ०शवर्त्तीनि G2, J. 7 Wanting in C along with the next line. 8 ०वत्यासु G1, G2, J, K. 9 ०त्र्या० G1, J. 10 ०न्या० J. 11 ०त्तु C. 12 Wanting in B. 13 परोडे० G1; परांद्दे० J, K; परोद्दे० G2. 14 पचरा B; G1, G2, J read पशव for परा च. 15 C, G1, G2, K read त्वेव for द्वे च; त्ये J. 16 ०रा च स्तुति B; पशवस्तु० G1, G2; वशवस्तु० J; पशवः स्तु० K. 17 ०स्तवे B. 18 ०देवः C. 19 ०ल्वाद G1, G2, J but a second hand in G2 has changed द into ह. 20 ०नाम्नि: B; ०नाम्नी G1, J, K. 21 प्रवि० G1, G2, J. 22 ०षः श्रुतः C; ०षश्रुतः J. 23 ०सामं सं B. 24 ०रेण C; ०रा G2; ०रो J. 25 त्रय-स्त्रिंशद्० G1, G2, J; त्रयस्० K. 26 ०शो G2, J, K. 27 त्रयस्त्रिंशस०B, G1.

अ[1]भिपरीत्य प्रत्यप[2]कर्षस्[3]ताद्दशमेतद् भव[4]तीति ।
समुच्चयो वा[5]नन्यार्थत्वात् ।
प्रस्तावशान्त्य[6]र्था हि वाक् ।
उद्गीथादि[7]शान्त्यर्थ ओङ्कारः ।
5 वाक्पू[8]र्वा सामा[9]न्यात् ।
एवं यथान्तरप्रत्यासत्तिः ।
उत्त[10]रां वाक्[11] सा[12]मान्यविधेराचाराच्च ॥ १३ ॥

---

1 अहरत्यस्तोगस्यन्त्याभिपरित्य B. 2 प is wanting in B. 3 ०र्षस्ता० C. 4 ०वति C, G1, G2, J, K. 5 वा नानार्थ० G1, G2, J, K. 6 ०शान्तर्था G1, G2; ०शान्ततर्था J. 7 ०थादे० G1, G2. 8 वाक्तु पू० C; वाक्तुपूर्व G1, G2, K; क्तुपूर्व J. 9 स्यात् C, G1, G2, J, K. 10 उत्तरी G1, G2, J. 11 वा C, G1, G2, J, K. 12 जघन्य० C, G1, G2, J, K.

# अथ तृतीयः प्रपाठकः

अथ का प्रथमा सꣳस्थेति ।
आग्निष्टोमीं[1] प्रथमां मन्य इति शाण्डिल्यः ।
प्रथमं[2] ह्येव स्थानं भवति ।
अथापि प्रथममधीमहे[3] ।
5 अथाप्यर्णु[4]प्रमुखानि भूतानि भवन्त्य[5]परोवरीया[6]ꣳसि ।
अथाप्याह—"यज्ञमु[7]खं वा अग्निष्टोमः" इति ।
अथाप्येतया सꣳस्थया चरति ।
अथाप्येषा समा[8]रब्धतमा[9] ह[10] भव[11]तीति ।
अथापि नाग्निष्टोममकृत्वा[12]परे सꣳस्थे[13] करोति ।
10 नह्यनुपादाय प्रथमामुत्तरयोः सिद्धिरस्ति ।
अनुपादायोत्तरे प्रथमा सिध्यतीति ।
अथाप्या[14]ह—प्रजापतिर्वा एषा सꣳस्थानां यद[15]ग्निष्टोमः ।
तां यदकृत्वाथान्यां कुर्यात्, प्रजापतिरस्य हिꣳसित[16]ः स्यादिति ।
यावदादेशमुत्तरे सर्वत्र ।
15 अथाप्यूर्ध्वानामेव सꣳस्थानां कृतानां व[17]दंति—
"देवा वा[18] अग्निष्टोम[19]मभिजित्योक्थानि नाशक्नुवन्नभिजेतुम्"[20] इति ।
PB. 8. 8. 1.

---

1 अग्निष्टोमं B. 2 ०मां C, G1, G2, J. 3 B adds इति. 4 ०प्युणु० G1, J. 5 ०न्ति परो० C, G1, G2. 6 ०य० G1, G2. 7 ०खमग्नि० C, J; ०खन्वाग्नि० G1. 8 ससा० J. 9 ०मां G1, G2, J, K. 10 Wanting in C, G1, G2, J, K. 11 ०वति G1, G2, J, K. 12 ०पार G1, G2, J. 13 स्थे ··· सꣳस्थानां (line 12) wanting in J. 14 अथा प्राह G1. 15 यदग्नि० J. 16 ०ꣳस्यसित G1. 17 ०दे० G1. 18. Wanting in G1, G2. 19 ०ष्टोमंभिजित्योस्थानि G1; ०जित्यो-स्थानि G2; ०ष्टोनभेजित्या स्थानिस्थानि J. 20 C, J add देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नुवन्नभिजेतुम् ; G1, G2 add देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नुवन्नभिजेतुं देवा वा उक्थान्यभिजित्य (०जि G1) म्.

अथापि नैतद्देवता[1]ः प्राहू राका सिनीवाली सरस्वती विष्णुरिति ।
सौविष्टकृतं[2] खल्वेतत् सोमस्य स्थानं यदाग्निमारुतम्[3] ।
थोऽयं[4] देवताः शꣳसन् सोऽप्यतिरात्रे सतीहैव[5] प्रत्याहृत्य शꣳसती-
त्युक्थ्या[6] ।

5 तां प्रथमां मन्य इति गौतमः ।
एवमाप्ताहमात्रासमानि सवनानि अभ्युद्ध्रियन्ते[10] ।
आर्भवच्छन्दाꣳसि अनुविधीयन्ते[11] ।
प्रस्थितयाज्या[12] ग्रहैश्च शस्त्रैश्च ।
अप्यहमेनमागूर्त्तिनमिव[13] मन्ये योऽग्निष्टोमयाजीति ।
10 ध्रुवमनु द्वादशस्तोत्रात्पूर्वं तत्प्रस्थितयाज्याभिर्विजानीम[14] इति ॥ १ ॥
अतिरात्रीं[15] प्रथमां मन्य इति धानञ्जय्यः ।
कृत्स्नं पूर्वं कर्म[16] परिपादया[17] इति ।
अथापि सं[18] मिमीते ।
"एषा वाग्निष्टोमस्य सम्मा[19] यद्रात्रिः ।" PB. 9. 1. 23.
15 "एषा वा उक्थस्य सम्मा यद्रात्रिः ।" इति । PB. 9. 1. 25.
कुतो[20] दृष्टेन प्रमा[21] स्यादिति[22] ।
अथापि नः स्तोमसमाम्नायः[23][24] ।
प्राह—अतिरात्रस्यैव स्तोमसमाम्नायो[25][26] भवति[27] ।
अथापि न उक्थसमाम्नायः[28] ।
20 प्राह—अतिरात्रस्यैव प्रथममुक्थानि[29] समामनामः[30] ।
अथापि नः कर्मणो यजूꣳषि[31] प्राहुः—
उपरि सन्धिभक्षात्[32] स्तोमविमोचनमधीमहे[33] ।

---

1 नोन्तदेवताः B; नोतद्देवताः G1, G2, J. 2 ०विकृष्ट० K. 3 ०तस्य B. 4 C, G1, G2, J add स; सा यायं K. 5 शꣳशिशस्ता अप्य० C; शꣳसिशस्ता अप्य० G1, G2, J, K. 6 स is wanting in B. 7 प्रत्या० C, G1, G2, J. 8 ०क्थं C; ०क्थ G1, G2, J; ०क्थ्य K. 9 एवं प्राप्ता० C. 10 अप्यु० C, G1, G2, J, K. 11 अनुधी० B. 12 ०तग्राह्या C; ०तयाह्या G1, G2, J. 13 ०मेतमेवमा० C. 14 ०भिह्वर्वि० B. 15 ०रात्रं C. 16 ०र्मा B. 17 परिपादधा B; ०परीपादाया C. 18 सन्मिते B. 19 सैमा इंद्रात्रिः G1, G2, J. 20 कु is wanting in G1, G2, J, K. 21 प्रामा G1, G2, J, K. 22 स्य० B, G1, G2, J, K. 23 ०मः स० G1, G2, J, K. 24 ०ययः G1, G2 J. 25 ०मः स० B. 26 ०भक्ष्यतो B. 27 ०न्ति G1, G2, J, K. 28 ०क्थ्य० C, G1, G2, J, K. 29 ०क्थ्यानि C. 30 समाम is wanting in G1, G2. 31 यज्ञꣳसन्धिं प्रा० C क. 32 ०भक्ष्य G1; ०भक्ष्यत् G2, J. 33 ०ना० G1, G2, J.

यन्नूनमन्या प्रथमा[1] सꣳस्थाऽभविष्यत् प्राक्तनं[2] स्तोमविमोचनं समाम्नास्यदिति ।
अथापि शश्वद्बह्वृचा अतिरात्रीमेव[3] प्रथमामधीयते[4] ।
तासां कां[5] काम्या का सर्वाभिप्रायेति[6] ।
5 आग्निष्टोमीं[7] चातिरात्रीं च ब्रुवते शौचिवृक्षाः ।
सर्वाभिप्रायेऽनवधारितकामे भवन्त[8] इति ।
"एकस्मा अन्यो यज्ञः कामायाह्रियते सर्वेभ्योऽग्निष्टोम" इति न काममवधारयति । PB. 6. 3. 2.
ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो[9] यजेतेति नैव काममवधारयति ।
10 "पशुकाम उक्थेन स्तुवीत" इति काममवधारयतीति । PB. 8. 8. 8.
सोऽशिथिला परिसꣳस्थिता भवतीति ।
सर्वाः सर्वाभिप्रायाः ।
सर्वासु काम्यानि विद्यन्त इति शाण्डिल्यः[10] ।
तथा गौतमधानञ्जय्यौ ।
15 सर्वाभिप्रायैः[11] खल्वयं ज्योतिष्टोमः ।
[12] सर्वाभिरेव सꣳस्थाभिः सर्वाभिप्रायो भवतीति[13]
यद्येतदवधारितकामेति, पश्यामो वै वयꣳ सर्वाभिप्रायेषु काममवधार्यमाणम् ।
यथोपर्वती[14] ग्रामकामस्य, प्रतिष्ठाकामस्य रथन्तरꣳ सन्धिषामेति रथन्तरꣳ सन्धिषामेति[15] ॥ २ ॥
20

## सप्तमः[16] पटलः

तस्य खल्वस्य ज्योतिष्टोमस्य षड् व्यञ्जनस्थानानि भवन्ति—
प्रतिपद् गायत्रं[17]णिधनं विष्टुतिर्ब्रह्मसामोक्थप्रणयः सन्धिषामेति[18] ।
तेषां किं[19] काम्यं किꣳ सर्वाभिप्रायमिति ।
25 यद्यत्[20] खल्वस्य ज्योतिष्टोमस्य[21] चरति[22] तत्तत्सर्वाभिप्रायम् ।
अथ यत्कामं[23] निवर्तते तत्काम्यम्[24] ।

---

1 प्र० is wanting in G1, G2, J, K. 2 ०क्तरं C, G1, G2, J, K. 3 ०त्रमेव B; ०त्री G1, G2, J. 4 ०मम० B. 5 Wanting in C. 6 सर्वाप्रयेति B. 7 अग्नि० B. 8 Wanting in K. 9 ०मे B. 10 ल्य is wanting in G1, G2, J. 11 ०प्रायसं ख० G1, G2; ०प्रायः सं ख० J; ०प्रायस ख० K. 12 C, G1, G2, J, K add 13 ०वती G1, G2, J, K. 14 ०वीती G1, G2, J, K. 15 C does not repeat it. 16 In B only. 17 ०त्रं त्रिणि० C. 18 ०न्धिसा० C, K. 19 Wanting in J. 20 प्रतिपद्यत् C, G1, G2, J, K. 21 ०म G1, G2, J. 22 चरिते B. 23 ०काम्यं C, G1, G2, J, K. 24 ०कामप्र० B. C, G1, G2, J, K.

प्रतिपत् सर्वाभिप्राया ।
सर्वा ह्यवधारितकामा भवन्तीति ।
उपवती[1]त्याहुः ।
प्रथमा[2]मन्वेनामधीमहे ।
5 अपि चैनां[3] ग्रामकामस्या[4]ह—ग्रामः[5] सर्वाभिप्रायो भवतीति ।
अथाप्यस्या[6]चारं दर्शयति—
ततश्चतुर्षु मासेषु शुनासीर्य[7]स्य लोके[8] ज्योति[9]ष्टोमोऽग्निष्टोम उपवती[10] प्रतिपदिति ।

"एषां[11] रथन्तरपृष्ठेऽग्रियवती बृहत्पृष्ठेऽग्रियवद् बार्हतं रूपमुपव[12]द्राथन्तर-
10 मुपवती रथन्तरेऽग्रियवती बृहतीति च भाल्लविनाम् ।" Ārṣ. K. V. 18 a.

अथाप्येनां सा[13]हस्रोत्तमे स्तोत्री[14]यस्योत्तमां दर्शयति—
औ[15]भयसाम्यात् तां न प्रथमाम् ।
ब्रा[16]ह्मणेनैव तद् व्याख्यातम् ।
15 अथाप्याहाभिषेचनीये—
'य[17]त् 'पवस्व वाचो अग्रियः' इति, SV. 2. 125; RV. 9. 62. 25; PB. 4. 2. 17; Ārṣ K. I. 1 b.

तेन यज्ञमुखान्न यन्ति ।" इति । PB. 18. 8. 10.
प्रकृत्या[18]पश्रयं दर्शयति ।
20 त[19]दपि शश्वद् ब्राह्मणं भवति—
एते वा[20]व प्रतिप[21]दौ सर्वाभिप्राये यदुपवती चाग्रियवती च ।
[ कामाय वा इतरा आह्रियन्त इति । ][22]
स्वरो गायत्रणिधनानां प्र[23]थमा विष्टु[24]तीनां श्यै[25]तंनौधसे ब्रह्मसाम्नाम् ।
षडुक्थानि सर्वाभिप्रायाणि भवन्ति ।
25 साकमश्वं सौभरनामेधे हारि[26]वर्णोद्वंशीये आष्ट्रा[27]दंष्ट्रमिति ।

1 अपव० J. 2 ०मां चैनाम० C; ०मां चैनामधीनामधीमहे G2. 3 तां C; चैतां G1, G2, J; च तां K. 4 ०स्य ह० C. 5 ग्रांहः B. 6 ०स्याश्चिरं C; ०स्याश्चरिं G1, G2, J, K. 7 ०नाशी० C; ०नाप्सीर्यं J. 8 ०क J. 9 ज्योति ज्योतिष्टोम G1, G2; ज्योतिष्टोम उप० J; 10 उपपदी B. 11 एषां B. 12 C, G1, G2, J, K omit द्राथन्तरमुपव. 13 सासह० G1, G2, J. 14 ०त्र० G1, G2, J. 15 औभय व्यौभय० G1, G2; औभयत्यौभय० J. 16 ब्र० G1, G2, J, K. 17 G1, G2, J omit य. 18 ०त्यपिश्रयं B; ०त्या प्रश्रयं C; ०त्या प्रत्ययं G1, G2; ०त्या प्रश्रययं J. 19 त is wanting in G1, G2. 20 वा B. 21 ०पादौ G1, G2, J. 22 Wanting in B. 23 B, K add प्रथमा. 24 धिष्ठु० J. 25 ०श्ये० G1, G2. 26 ह्रावर्णोद्व० G1, G2; ह्रार्वणोद्व० J. 27 आष्ट्रा० B.

तषां कान्युक्थे[1] कान्यतिरात्र इति ।
सर्वेषां याथाकामीति[2] शाण्डिल्यः ।
हारिवर्णोद्वंशीये वा हारिवर्णा[3]ष्टादंष्ट्रे वोक्थान्ते [चैवं[4]] कुर्यादिति गौतमः ।
5 अति[5]रात्रे सौभरनार्मेधे ।[6]
तच्चर्यां[7] जानीमः ।
हारिवर्णोद्वंशीये वा हारिवर्णा[8]ष्टादंष्ट्रे वोक्थान्ते[9] चैव कुर्यादिति[10] ।
[11]अतिरात्रे चेति धानञ्जय्यः[12] ।
सौभरनार्मेधे त्वेवो[13]क्थान्ते न कुर्यादिति ।[14]
10 रथन्तरं सन्धिषाम्णो[15]ं सर्वाभिप्रायम् ।
तद्धि[16] चरति ।
तत्र यानि कामावधारणानि सर्वाभिप्राये[17]षु तानि भवन्ति ।
तानि खल्वेतानि व्यञ्जनान्येकजातीयान्येव समादध्यात् ।
एवं चाव्याहतः क्रतु[18]र्भवति ।
15 अपि चैवमार्षेयकल्पो दर्शयति ॥ ३ ॥
अथानुष्टु[19]भस्य भागस्य का छन्दोभक्तिरिति ।
एकाक्षरां ब्रुवते [20] [21]शौचिवृक्षा[22]ः ।
तद्विजानीमः ।
बहुरक्षरप्रवादो भवति ।
20 एकाक्षरा वै वा[23]क् ।
अक्षरेणान्ततः प्रतिष्ठाप्यमक्षरम् ।
व्यक्षरमुच्छिष्यत इति हि भवतीति ।
सर्वैव द्वात्रिंशदक्षरेति शाण्डिल्यः ।
तथा गौतमधानञ्जय्यौ ।

---

1 कन्यु० J. 2 ०मी G1, G2, J, K. 3 हावर्णा० G1, G2, J. 4 Wanting in B, C; वव G1, G2, वैव J. 5 ति is wanting in G1, G2, J. 6 B reproduces here त्वेवोक्थान्ते न कुर्यादिति रथन्तरं सन्धिषाम्नां सर्वाभिप्रायं तद्धि चरति । (lines 9-11). 7 ०च्चर्याय B; ०चर्यो J. 8 ०र्णावाष्ट्रा० B. 9 ०क्थ्यंक्थाते G1, G2, J. 10 ०र्यात् C. 11 रात्रे G1, G2, J. 12 ०य्ये B. 13 वो० C; न्वो (त्वे G2) वोक्थान्ते कुर्यादतिरात्रे चेति धानञ्जय्यः सौभरनार्मेधे वो० G1, G2, J. 14 K repeats रात्रे चेति ··· कुर्यादिति. 15 ०षाम्ल G1; ०षाम्ला G2, J, K. 16 तद्विच० C, G1, G2, J. 17 ०ये खुतानि C. 18 ०तुर्त्तवति G1, G2, J. 19 ०ष्टुभाग० G1, G2; ०ष्टुप्भाग० J. 20 ०तो G1, G2, J. 21 शो० G1, G2, J. 22 ०क्षः G1, G2, J. 23 वा is wanting in G1, G2, J.

एतामनुष्टुबित्याचक्षते ।
[1]अथाप्येनामनुष्टुबर्थे [निधी[2]येमा[3]नां] पश्यामः ।
अथापि यस्तावद[4]कुशलं छन्दसामौक्थि[5]कामनुष्टुभं पृच्छेदेतामेव द्वात्रिंशदक्षरामाचक्षी[6]त ।
5 तत्खलु गायत्रं प्रातःसवनं, त्रैष्टुभं[7] माध्यन्दिनं, जागतं तृतीयसवनम् ।
यदूर्ध्वमुक्थेभ्य[8] आनुष्टुभः[9] स भाग इति ।
कथमु द्वादशस्तोत्र [10]आनुष्टुभो भागः स्यादिति ।
सवनानि प्रति[11] प्रविष्ट इति गौतमः ।
"अष्टाक्षरा गायत्री, हिङ्कारो नवमः, एकादशाक्षरा [12]त्रिष्टुप्, द्वादशाक्षरा
10 जगती च्छन्दोभि[13]रेवानुष्टुभमाप्नोति यजमानस्यानवलोपाय ।" इति । PB. 6. 3. 13.

अन्त[14]स्थान एष भाग इति शौचिवृद्धिः[15] ।
एकविंशस्तोमो वाक् सामा[16]न्तः ।
एष नूनं द्वादशस्तोत्र[17] आ[18]नुष्टुभो भागः स्यादिति ।
15 सर्वैव षट्त्रिंशदक्षरेति शाण्डिल्यः ।
तत्र[19] यच्चत्वार्यक्षराण्युपा[20]हरति परोक्षीचि[21]कीर्षन्निति ।
[22]पदप्रत्यवरोहं शौचा[23]दिरेयः ।
यथैतद् ब्राह्मणम्—द्वादशाक्षरमेकादशाक्षरमष्टाक्षरं वाग्द्वात्रिंशीति[24] ।
[25]पञ्चदशस्तोत्रे सवना[26]नि प्रति प्रविष्ट इत्येव गौतमः ।
20 अच्छावाकस्तोत्रीये शौचिवृक्षा[27]ः ।
अथ षोडशिनि सर्वैव चतुस्त्रिंशदक्षरेति शाण्डिल्यः ।
तत्र यद् द्वे अक्षरे[28] उपाहरति परोक्षीचिकीर्षन्निति[29] ।
उपसर्गाक्षराणि शौचिवृक्षाः ।

---

**1** तथा० B. **2** Wanting in B; G1, G2 repeat य. **3** ०मानानां C, K. **4** ०दन्कु० G1, G2;० दकु० J. **5** ०क्थिक० C, G1, G2, J, K. **6** G1 repeats पृच्छेदेतामेव द्वात्रिंशं; G2 repeats within brackets पृच्छेदेतामेव द्वात्रिंश. **7** C, K add सवनं; G1, G2, J read ०नसवनंसवनं. **8** ०भ्यो G1, G2, J. **9** ०भं G1, G2, J, K. **10** अ० G1, G2, J. **11** Wanting in G1, G2, J, K. **12** त्रै० G1, G2, J. **13** भि is wanting in G1, G2, J. **14** अन्तन्त० C, **15** ०क्षः G1, G2, J. **16** ०म० G1, G2, J. **17** ०त्रस्यानु० C; ०त्रं अनु० G1, G2, J; ०त्रं आनु० K. **18** षट् त्रिंश० C. **19** ०त्रैव C. **20** ०प० B. **21** ०तिकीर्षभिन्निति G1, G2; ०तिकीर्षभिन्नति J. **22** पाद० B. **23** शौवाजिरे० B; शौचादितरेयः C. **24** B omits ति. **25** C, G1, G2, J, K add अथ. **26** ना is wanting G1, G2. **27** ०क्ष G1, G2. **28** G1, G2, J add अक्षरो. **29** इति is wanting B, K.

दशाक्षरपादꣳ शौचा[1]दिरेयः ।
अथातिरात्रे सर्वैव द्वात्रिꣳशदक्षरेति शाण्डिल्यः ।
तां यदभ्यासेन करोति परो[2]क्षीचिकीर्षन्निति ।
वैत[3]हव्यस्तोत्रीये[4] शौचिवृक्षा[5]ः ॥ ४ ॥
5 अथायꣳ सन्धिरन्तर्भागं भवती[6]३ बहिर्भागमिति ।
बहिर्भागमित्याहुः ।
समासेषु भागेष्वागच्छति ।
[ अथाप्यॆ[7]स्या छन्दसा भक्षयति बहिर्भागमिवैव स तत[8] इति ।[9]
अन्तर्भागमित्यपरम् ।
10 का सा भक्तिर्या बहिर्भागमिति ।
अथाप्येनमुक्थैः सम्मिमीते ।
अन्तर्भागमुक्था[10]नि भवन्ति ।
अन्तर्भागः सन् किंभागः स्यादिति ।
गायत्र इत्याहुः ।
15 समासेषु भागेषु पुनरुपक्रमे कोऽन्यो[11] गायत्र[12]वान् स्यादिति ।
सर्वभाग इत्याहुः ।
सर्वभागं पृष्ठं ह्यत्र रथन्तरमिति ।
आनुष्टुभ इत्यपरम्, रात्रानुबन्धतयेति ।
क्रमे भवती३ समास इति ।
20 क्रमे भवतीत्याहुः ।
समस्तेऽक्षरे रात्रिपर्यायाः क्रमे सन्धिरिति[13] ।
अपि वा क्रमे रात्रिपर्यायाः समस्तेऽक्षरे सन्धिरिति ।
नैत[14]दिह विज्ञायत इति शाण्डि[15]ल्यायनः ।
अमुत्र खल्वेतद् द[16]शरात्रे विज्ञायते ।
25 इदं पदस्य स्थानमिदमक्षरक्रमस्येदं वृद्धेरिदꣳ समासस्येति ।
तत्र[17] हि द्विर्भागाः प्रकल्प[18]यन्त इति विज्ञायत एवेति ।
वाज्या[19]ः पदस्थान्यहःसवनानि क्रमे, षोडशी तमप्यभिविहारꣳ श[20]ꣳसेति ।

1 शौवाजिरेयः B. 2 परो is wanting in G1, G2, J. 3 त is wanting in G1, G2. 4 ०त्राये G1, G2, J. 5 ०क्षः G1, G2, J. 6 भवति B. 7 ०प्यास्यास्या G1; ०प्या० G2, J. 8 त G1, G2, J. 9 B omits up to p. 50. 17. 10 ०क्तानि G1. 11 कोत्या G1, G2, J. 12 ०त्र G1, G2; ०त्रत्स्या० J; ०त्रः K. 13 रि is wanting in G1, G2, J. 14 ०दिहर्वि० C. 15 ०ल्योनः G1, G2, J. 16 ०तद्देश० G1, G2, J. 17 तर्हि for तत्र हि in G1, G2, J. 18 ०ल्पन्त J, K. 19 वाज्यः पदः स्थान्यहः स च भानि क्र० G1; वाज्यः पदः स्थान्यहः सव० G2, J, K. 20 शꣳ is wanting in J.

एतमेवा[1]त्तरक्रममनुचिख्यापयिषन् वृद्धौ रात्रिपर्याय[2]स्थानमप्यभ्यस्यति ।
"अभ्याघात्यं[3]सामानो हि छन्दोमाः" इति । PB. 14. 9. 30.
तदप्युभयोः सन्ध्योः सतोरेतमेव सन्धिरित्याचक्षते समासादिति ।
एतेनं[4] सर्वैकाहेषु सामभागा व्याख्याताः ॥ ५ ॥

5 अथ दशरात्रे कथं भागा इति ।
याथा[5]कामी भागानामित्येके[6] आहुः ।
अँस्त्येवै[7]क[8]भाग्यमस्ति सर्वभाग्यम् ।
अपितु त्र्यहः[9]श एव भागा स्युः ।
गायत्रः प्रथमस्त्र्यहः ।
10 त्रैष्टुभो द्वितीयः ।
जागतस्तृतीयः ।
आ[10]नुष्टुभः षोडशी ।
आनुष्टुभं दशम[11]म् ।
तदप्येवं[12]मिव ब्राह्मणं भवति—"प्रातःसवं[13]नेनैव प्रथं[14]मस्त्रिरात्रैं[15]ः कल्पते ।
15 माध्यन्दिनेन सव[16]नेन द्वितीयः,[17] तृतीयसवनेन तृतीयः, अग्निष्टोमेन साम्नैव दशममहः ।" इति । PB. 10. 5. 11.
अथापरं गायत्रं] [18]त्रैष्टुभं जागतमिति प्रथमस्त्र्यहः, एवमेव द्वितीयं[19] एवं तृतीयं[20]ः ।
आ[21]नुष्टुभः षोडशी ।
20 आनुष्टुभं दशमम् ।
अथापरं गायत्रं त्रैष्टुभं जागतमिति प्रथमस्त्रे[22]यहः ।
आनुष्टुभो द्वितीयः[23] ।
गा[24]यत्रं त्रैष्टुभं जागतमिति तृतीयः ।
आ[25]नुष्टुभः षोडशी ।
25 आनुष्टुभं दशमम् ।

---

1 एतम० G1, G2, J; एवमे० K. 2 ०र्यायास्तानप्य० C; ०र्यास्थानप्य० G1, G2, J; ०र्याया० K. 3 ०त्यसा० G1, G2, J, K. 4 अनेन K. 5 याथोकामी G1, G2, J. 6 क is wanting in G1, G2, J. 7 अस्तोवै० G1, G2, J, K. 8 ०कल्पम० G1; ०कग्ल्य G2. 9 ०स्त्रहः G1, G2, J. 10 अनु० J. 11 ०म्यं G1, G2. 12 ०प्येवतिव G1, G2, J, K. 13 ०सर्वं० G1. 14 थ is wanting in G1, G2, J. 15 ०त्रः । क० G1, G2. 16 Omitted by J. 17 तृतीयः J, K. 18 B resumes from here ( see p. 49 line 8 ). 19 ०या G1, G2, J, K. 20 ०या G1. 21 अनु० J. 22 ०स्त्रयी० B. 23 ०यम् B. 24 गः य० G1, G2, J. 25 अनुष्टुभ G1, G2, J.

अथापरं गायत्रं त्रैष्टुभं जागतमानुष्टुभमिति प्रथमश्चतुरहः ।
एवमेव छन्दोमचतुरहो बहिर्भागे[1] पञ्चमं[2] षष्ठ इति ।
अथापरं पदस्थः प्रथमस्त्र्यहः, अक्षरस्थो[3] द्वितीयः, वृद्धस्तृतीयः[4] ।
आनुष्टुभः षोडशी ।
5 आनुष्टुभं दशमम् ।
ते खलु शश्वद् भाल्लविनो भक्षाननुव्यूहन्ति ।
जगती प्रातःसवनं[5] आगमत् ।
तत्र जगच्छन्दसा[6] भक्षयिष्याम इति ।
न वयमनुव्यूँहामः[7] ।
10 सवनभक्तिज्ञात्रा एव भक्षेषु स्म[8] इति ।
अथ संवत्सरे[9] चतुर्विंशं लुप्तं[10]भागमिति शौचिवृक्षिः ।
गायत्रं वा स्तोमज्ञात्रेण, त्रैष्टुभं वा स्थानेन, सर्वभागं वैकाह्यात्[11] ।
अथाभिप्लवा ऐकाहिका[12] वा स्तोमज्ञात्रेण षाडहिका[13] वा तन्त्रज्ञात्रेण ।
त्र्यहभागात्स्वरसाम्नामानुष्टुभो विषुवांश्चातुर्थ्यात्[14] सर्वभागो वैकाह्यात्[15] ॥६॥

15 अथाहीनेषु द्विरात्राणां गायत्रं पूर्वमहः ।
त्रिभागमुत्तरं यत्प्राग् ब्रह्मसाम्नस्तत्[16] त्रैष्टुभम् ।
ब्रह्मसामप्रभृति जागतम् ।
आषोडशिनः षोडशिप्रभृति[17] परमानुष्टुभम् ।
त्रिरात्राणां गायत्रं प्रथममहः, जागतं द्वितीयम्, त्रैष्टुभं तृतीयम्[18] ।
20 आषोडशिनः षोडशिप्रभृति परमानुष्टुभम् ।[19]
वैदत्रिरात्रे[20] सर्वभागान्यहानि ।
चतूरात्राणां गायत्रं त्रैष्टुभं जागतमिति त्र्यहः ।
अक्षराक्षरे[21] चतुर्थमिति शौचिवृक्षिः ।
समस्ते[22]ऽक्षर इति गौतमः ।[23]
25 पञ्चरात्रेष्वक्षराक्षरयोरेव चतुर्थपञ्चम इति शौचिवृक्षिः ।[23]

---

1 ०र्भागं C, G1, G2, J, K. 2 ०म इत्ये ष० G1, G2, J; ०म इत्य ष० K. 3 अत्वस्थो B. 4 वृद्धिस्थस्तृ० C, G1, G2, J, K. 5 ०नमागमं C; ०ने मागमं G1, G2, J; ०नं मागमत् K. 6 जागतच्छ० C; जागतं छ० G1, G2; जगतं छ० J. 7 ०व्यु० G1, G2, J. 8 सम B. 9 सुव० B. 10 ०ब्ध० C, G1, G2, J, K. 11 वैकाह्यादिति C, G2, J, K; वैत्यकाह्यादिति G1. 12 ऐक G1; एके G2, J, K. 13 षोडाहिका B; षाडाहिंका G1, G2; ⁻डहिंका J. 14 ०र्थ्या G1, G2, J, K. 15 ०ह्यादिति C, G1, G2, J, K. 16 B omits तत्. 17 ०शिनप्र० G1, G2, J, K. 18 Wanting in G1, G2, J. 19 B repeats it; wanting in J. 20 ०ति० B. 21 अरक्षराक्षरे G1, G2, J, K. 22 ०स्थे० B. 23 G1 omits it.

समस्तेऽह्नर् इत्येव गौतमः ।
षड्रात्रप्रभृतिषु दाशरात्रिका[1] भागा[2] यावद्यावदभिप्राप्नुयुः[3] ।
अथ यत्राहीन[4] एकाहैर्वर्तेत सर्वभागास्तत्रैकाहाः[5] स्युरित्येके ।
आहीनिका[6] भागा यथास्थानमित्यपरम् ।
5 एतेनाहीनेषूपधीयमाना व्याख्याताः ।
अथ[7] ये ऊर्ध्वं दशरात्रादुपधीयेरन् ये वा मध्ये दशरात्रस्य भागपर्वणि सर्वभागा एव ते स्युः ।
एतेन सत्रेषूपधीयमाना व्याख्याताः ।
अहीनैकाहसमासा[8][9] ह्येव सत्राणि भवन्ति ॥ ७ ॥

10 अथ सुब्रह्मण्यायां[10] विचारयति—
ऋग्नु[11] खल्वियं भवती[12]३ सामेति ।
ऋग्भवतीत्याहुः[13] ।
ऋच इवास्या नामधेयꣳ सुब्रह्मण्येति[14] ।
सामेत्यपरम् ।
15 गीतꣳ हि भवति ।
अथाप्याहुः—मन्त्र एव खल्वयं[15] शिथिलो भवति, आह्वानार्थस्तस्येयम्[16][17]भ्या इयꣳ स्यादिति (?) ।
अथाप्याहुः—नैवेयमृङ् न साम सुब्रह्मैवेदमिति[18] ।
ब्रह्मणो भवती[19]३ उद्गातुरिति ।
20 ब्रह्मणो भवतीत्याहुः ।
एतेन ह्यग्रे संयुज्यते ।
अथापि ब्रह्मा सुब्रह्मण्य इति नामधेयसारूप्यात्[20] ।
अथाप्येवꣳ[21] सर्वा अहोरात्रा[22] वषट्कारिण्यो[23] भवन्ति[24] ।
उद्गातुर्ह्याग्नीध्रः सम्पद्यत इति ।
25 उद्गातुरित्यपरम् ।

---

1 दश० G1, G2, J, K. 2 B adds वा. 3 यद्या० B. 4 योऽहीन B. 5 त्सर्वे भागाः । स्तत्रै० G1, G2; त्सर्वं भागाः स्तत्रै० J; त्सभा० K. 6 ०क C, G1, G2, J, K. 7 B reads अत for अथ ये. 8 अहैनै० G1, G2, J. 9 ०मासो B, G1, G2, J, K. 10 ह्म is wanting in C. 11 ऋगु C; असु G1, G2, J. 12 ०ति B. 13 इदमृ० B. 14 ह्म is wanting in G2. 15 खल्वियं B. 16 ०ह्वार्थ० B. 17 ०स्येयमभ्याꣳयियꣳ० C; ०स्येमभ्यायियꣳ सा स्या० G1; ०स्येमभ्यायियꣳ सा स्या० G2, J; ०स्येमभ्याप्रियसा स्या० K. 18 ०ह्म० B. 19 ०वति B. 20 भागधेय० G1, G2. 21 अशाप्येव G1, G2; अशाप्येवा स० J. 22 होत्रा B. 23 ०ट० C. 24 ०वति G1, G2.

गीतकारी हि[1] भवति ।
[सं[2]] यदभक्तः[3] पुरा ह्यभक्तेभ्यः कर्मापवृज्यत[4][5] इति ।
अथैनानागतत्वात्[6] कालादहीनेषु सत्रेषु[7] याजमानात् "नामग्राहः किमर्थः"
इति । Ārṣ. K. V. 7a.
5 उच्चावचचरणाः स्त्रियो भवन्ति ।
स इह[8] देवसादये च मनुष्यसादये च येषां पुत्रो वक्ष्येत[9], तेषामेव पुत्रो
भविष्यामि, यांश्च[10] पुत्रान् वक्ष्यति[11] ते मे पुत्रा भविष्यन्तीति[12] शाकटी-
मन्ववरुह्याह्वयेद्राज्ञोऽप्रत्यारोहायाप्रत्यारोहाय[13] ॥ ८ ॥
अष्टमः[14] पटलः
10 अथातो दशरात्रः ।
तस्य ब्राह्मणेनैव द्रव्यसमुद्देश उक्तः ।
यानि चैतानि ज्योतिष्टोमानि[15] द्रव्यलक्षणानि[16] ।
यानि च पृष्ठैः समानरूपाणि[17] ।
यानि च[18] दशरात्रेण[19] समानसङ्ख्यानि ।
15 यथैतत् प्रथमानि[20] प्रथमे[21] द्वितीयानि द्वितीय इति ।
स्थानतो[22][23]ऽसमानसङ्ख्यं[24] सम्पश्येत् ।
अथैताः सप्त नामविभक्तयः[25]—
स तं तेन तस्मै तस्मात् तस्य तस्मिन्निति ।
आमन्त्रिताऽष्टमी ।
20 स खलु विभक्तिमामन्त्रितां प्रथमेऽहनि करोति ।
कस्य हेतोरिति ।
प्रत्यक्षविभक्ति[26] रथन्तरम् ।
आमन्त्रितस्य न परोक्षमस्तीति ।
[अथाप्येषा प्रथमाग्निमन्थनीया[27] भवति, तां चतुर्थेऽहनि करिष्यन् भवति ।[28]

1 ह C, G1, G2, J, K. 2 Wanting in B. 3 ०भक्तेभ्यः C; ०भक्ताः G1, G2, J; ०भक्षाः K. 4 स्य भ० C, G1, G2, J, K. 5 कर्म प्रवृ० C; कर्मा-वृ० J, K. 6 अतिनागतत्वात् B; अथैतानाग० C. 7 G1 adds स. J. 8 ह G1, G2. 9 वक्ष्येते B; वक्ष्यते, तेषामेव पुत्रो is omitted by C. 10 यंश्च० G1. 11 वक्ष्ये C; वक्षे J, K. 12 ०ष्यतीति G1, G2, J, K. 13 ०ज्ञा प्र० B. 14 In B only. 15 ज्यौ० C. 16 द्रव्याणि C. 17 न is wanting in G1, G2, J. 18 चतुर्द० G1, G2. 19 दशारेण B; ०र्शरात्रे J; ०रात्रे K. 20 प्रायत्मानि G1, G2, J. 21 प्रथमद्वि० C, G1, G2, J, K. 22 G1, G2, J add संख्य. 23 ०तोऽपि स० C, 3, K. 24 ०नꣳ G1, G2, J, K. 25 म is wanting in B. 26 वि is wanting in B, C. 27 प्रथिमा० G1, G2, J. 28 Wanting in B upto p. 54. 17.

तमिति द्वितीया, तां द्वितीये ।
तेनेति[1] तृतीया,[2] तां[3] तृतीये ।
तस्मा इति चतुर्थी, तस्यां[4] न द्रव्यं विद्यमानमाहुः ।
एकामुदाहरन्ति—
5 'प्र तव्यसीं नव्यसीं धीतिमग्नये' इति ।
RV. 1. 143. 1.

सैषा प्रतवती[5] भवति भागान्तेऽपरूपा ।
स इति प्रथमा, तां चतुर्थेऽहनि करोति ।
कस्य हेतोरिति ।
10 प्रत्यय एष भागानां प्रत्यय[6] एष विभक्तीनाम् ।
प्रत्यये प्रत्ययम् ।
अथापि नामधान्येषा भवति ।
एतस्मिन्नहन्यग्निं जनयन्ति ।
जातस्यो नाम[7] धीयत इति ।
15 तस्य ब्राह्मणं भवति—"देवा[8] वै श्रियमैच्छंस्तान्न[9] प्रथमेऽहन्यविन्दन्न[10]
द्वितीये न तृतीये, तां चतुर्थेऽहन्यविन्दन्[11]" इति । PB. 10. 7. 2.
एतां श्रियमाह—
नामधेयं[12] ह विभक्तयः[13] श्रिता भवन्तीति[14] । ]
अथाप्येषा[15] द्विसंशाया पञ्चमेऽहनि भवति ।
20 तस्येति वा तस्मादिति[16] वा ।
तस्मादिति भवतीति गौतमः ।
तां[17] शश्वदेके चतुर्थी[18] ब्रुवते ।
तां ततो नामधान्या प्रच्युताम[19]नन्तरस्मिन्नहन्यनुगृह्णाति ।
तदप्ये[20]वमेव ब्राह्मणं भवति[21]—"तेनो[22] श्रीः प्रत्युपोदितेति" । PB. 10.
25 7. 2.

---

**1** ते is wanting in G1. **2** Omitted by G1, G2. **3** Wanting in G1, G2. **4** तस्मा G1, G2. **5** प्रवती G1, G2, J, K. **6** प्रत्यय ··· विभक्तीनाम् wanting in J. **7** मम G1, G2; नामम J; मान K. **8** दैवा J. **9** ०मिच्छंस्तान्य G1, G2, K, J. **10** ०विदन्यविदन्न K. **11** ०हन्य इन्य विद० G1, G2. **12** ०धेये G1, G2, J, K. **13** ०क्तियः G1, G2, J, K. **14** ०तीति G1, G2, J, K. **15** B resumes from here ( see p. 53. 24 ); G1, G2, J, K omit भवन्तीति ··· तस्मादिति ( line 20 ). **16** तस्मादिति वा is omitted by C. **17** तां स्विदेके B. **18** चतुर्थं B, G2, J. **19** ०तामन्यतर० C. **20** ततप्येवामेव G1. **21** ०तीति K. **22** तेना B, G1, G2.

[1]ब्रह्मण आज्ये नि[2]रुच्यते—

'इन्द्रात्परितन्वं म[3]मे' इति। SV. 2. 340; RV. 8. 76. 12.

त[4]स्येति भवतीति धानञ्जय्यः।

सा षष्ठी, तामामन्त्रितया प्रच्युतामनुगृह्णाति।

5 अथाप्येतयोः पूर्वयोस्तृतीयया समानं द्विवचनम्।

स तयै[5]वं ते उप[6]त्ति अम[7]स्त—

अपि वा प्रत्यवरोहार्थ एवाकरिष्यत्।

समूढाँज्ये निरुच्यते।

'अग्ने[8] स्तोमं मनामहे सिध्रमद्य दिविस्पृशः।

10 देवस्य द्रविणस्य [9]वः॥' SV. 2. 755. RV. 5. 13. 2; MS. 4. 10. 2: 145. 12; KS. 20. 14.

इत्यभविष्यदिति।

अथा[10]पि व्यूढाज्य एव भवति।

'तव श्रियो वर्ष्यस्येव विद्युतः' इति। SV. 2. 332. RV. 10. 91. 5; PB. 13. 2. 1.

15

त्व[11]च्छ्रिय इत्यभविष्यदिति।

आमन्त्रि[12]तैव षष्ठे भवति।

ए[13]वमाद्यवसानसमाधिरिति॥ ९॥

"अथैषा स्वरवि[14]भक्तिः—औ[15]शनं प्रथमे, वासिष्ठं द्वितीये, उभयतः स्तोभं[16]

20 गौतमं तृतीये, आभीशवं चतुर्थे, आ[17]नूपं पञ्चमे, इहवद्वामदेव्यँ षष्ठे।

अथैषा निधनवि[18]भक्तिः—नौधसं प्रथमे, श्यैतं[19] द्वितीये, महावैष्टम्भं तृतीये,

आथर्वणं चतुर्थे, बा[20]र्हद्गिरं पञ्चमे, गो[21]ष्ठं षष्ठे।

[22]अथैषेडावि[23]भक्तिः—कालेयं प्रथमे, मा[24]धुच्छ[25]न्दसं द्वितीये, रौरवं तृतीये,

---

1 नवै ब्रा० C क. 2 न G1, G2, J. 3 ममेति। B. 4 J, K add तस्या-दिति ०स्यैति G1, G2, J. 5 तायै० G1, G2, J. 6 ०त्ते B. 7 समूढाज्योतिनि० G1, G2, J. 8 अग्ने G1, G2, J. 9 य इति विणस्य व G1, G2, J. 10 पि is wanting in G1, G2. 11 त्वच्छ्रियत C. 12 ०न्त्र्यचैवं G1, G2; ०न्त्रिवैवं J. 13 एवामा० G1, G2. 14 ०रभ० B. 15 औथनं G1, G2, J. 16 स्तोमं J. 17 आन्वयं G1, G2, J. 18 ०नभक्तिः B; ०नविभक्ति G1, G2, J. 19 श्येतं B, J. 20 बार्ह० G1, G2. 21 गौ० G2. 22 अप्यैषेडा C, J; अथेषेडा K. 23 ०डाभक्तिः B. 24 माध्व० J. 25 ०श्छ० G1, G2, J.

पृश्नि चतुर्थे, रायोवाजीयं पञ्चमे, गोष्ठ एव षष्ठे।" Agni. LŚ. 4. 5. 18.
अथैषं[1] छन्दोमेष्विडाविभक्तिः[2]—
जराबोधीयं[3] सप्तमे।
इडानां[3] सङ्कारोऽष्टमस्य सती नवमेऽहनि[4] क्रियते।
5 प्रतीचेनेडं[5] काशीतं नवमे।
उत्सेधो[6] दशमे[7]।
अथ नौधसे वदति[8]—
'इन्द्रं[9] गीर्भिर्हवामहे'[10] इति। RV. 8. 76. 5; PB. 11. 4. 4.
तत्खलु हवामह इत्येव कर्तव्यम्।
10 विधिप्रमाणात्[10][11]।
कथमयथाविधि कुर्यामेति।
आम्नायद्वैतेन ब्राह्मणमुपवर्णयतीत्यपरम्[12]।
तन्नियोगाय न प्रभवतीति।
एतेनैतद्[13] व्याख्यातम्—
15 'अक्रान्त्समुद्रः परमे[14] विधर्मन्'[15] इति। SV. 1. 529; 2. 603; RV. 9. 17. 40; PB. 15. 1. 1.
यानि चैवंजातीयानि—
यथाक्षरे[16] वदति—
"यः पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्यादाक्षारं ब्रह्मसाम कुर्वीत"
20 इति। PB. 11. 5. 11; LŚ. 10. 1. 13.
किं तस्य स्थाने स्यादिति।
एते एवान्योन्यस्य[17] स्थानं व्यतिहरेत्।
नौधसमुष्णिहि कुर्यादिति।
तदाहुः—व्यतिहरति चेद्यत्र बृहत्षोडशिसामं[18] स्याद् गौरीवितं नूनं
25 द्वितीयस्याह्नः पृष्ठं कुर्यादिति।
अथ वै सञ्चारयेदिति[19]।

---

1 ०षां G. 2 ०डाभ० B; ०विक्ते G1, G2, J. 3 इज्याना०० G1, G2; इज्यना०० J. 4 G1, G2, J add क्रिय इनि. 5 ०नैडं G1. 6 उत्सोधो G1, G2; उत्सोधो J. 7 ०मः G1, G2, J, K. 8 वदन्ती G1, G2, J, K. 9 ई गी० G1, J; ईन्द्र गी० G2. 10 विधिः प्र० G1, G2, J. 11 ०णाः C, G1, G2, J, K. 12 G1, G2, J omit व. 13 ०नैव G1, G2, J, K. 14 प्रथमे SV, RV but PB has परमे. 15 ०र्मन्निति. G1, G2, J, K. 16 ०क्ष्यरे G1, G2. 17 वा० C ख, G1, G2, J, K. 18 सामा G1, G2, J. 19 ०येति G1, G2, J, K.

सञ्चारयति चेद्गौरीवितमेवानुष्टुभि कुर्यात्, गौरीवित१ षोडशिसामेति[1] ।
अथ वै प्रतिनिदध्यादिति[2] ।
प्रतिनिदधाति चेद्यत्र[3] बृहत्षोडशिसाम स्यात्, किं तत्र बृहत्सदृशं द्वितीयस्याह्नः पृष्ठं कुर्यादिति ।
5 अथ कथ१ स्यादिति ।
सञ्चारयेदहः[4] ।
नानाहःसु[5] यानि सञ्चारिधर्माणि[6] स्युः प्रतिनिदध्यात् ।
समानेऽहनि व्यतिहरेत्, यत्र व्यतिहारमभिरूपं मन्येत ।
प्रतिनिधिष्विहाभिरूपतरम्[8] ।
10 पौष्कलमुष्णिहि[9] कुर्यात् ।
एतच्च ज्योतिष्टोमानां[10][11] द्रव्याणां[12] दशरात्रे निहितं भवति ।
अपिच पदनिधन१ राथन्तरेऽहनीति ।
यज्ञायज्ञीयमग्निष्टोमसाम[13], यज्ञे यज्ञे कुरुतेति ।
तदेवाभिवदति ।
15 अथाप्येष तृतीयसवने सामान्तस्तमदिदेशयिषीत्[14][15] ॥ १० ॥
"अथ वैरूपे वदति—
'यथा मण्डूक आद् करोत्येवं निधनमुपयन्ति' इति । PB. 12. 4. 16.
कस्येदं ब्राह्मण१ स्यादिति ।
कृता राथन्तरीडा[16] कृता बार्हतीति कौत्सः ।
20 तदिदमकृतकारं ब्राह्मणमर्द्धेडाब्राह्मण[17] १ स्यादिति ।
पञ्चमे सेयं[18] प्रत्याहृता भवतीति गौतमः ।
तां परोत्तीकृत्याभिव्याहरेयुः[19][20] ।
एवं पञ्चमेऽहन्ययातयामा भवतीति ।
तदप्येवमिव[21] ब्राह्मणं भवति—'अयातयामतायै' इति । cp. PB. 12. 4. 16.
25

1 ०समेति० G1, G2; ०सनेति J. 2 ०विति G1. 3 च० G1, G2, J; त० K. 4 चारये ( ति सञ्चारयति चेद्गौरीवितमेवानुष्टुभि कुर्याद्गौरीवित१ षोडशिसमेति । अथ वै प्रतिनिदध्या किं ) दह G1; वारयेदह G2, J. 5 ०हास्सु C. 6 ०धर्मिणि B. 7 ०निधिस्त्विहा० C; निस्त्विधिहा० G1, G2, J; ०निध्विस्त्विहा० K. 8 ०तरः C, G1, G2, J, K. 9 हि is wanting in G1, G2. 10 ज्यौ० C. 11 B adds अत्र. 12 ह्व्याणां G1. 13 ०ज्ञीतिम० G1, G2. 14 ०सवन१ सा० C; ०सवनसा० B, K. 15 ०मदी० B. 16 ०रीडाः G1, G2, J. 17 ०णार्द्धेसाब्रा० B. 18 ०ढेयं C, G1, G2, J, K. 19 ०त्तत्य० G1, G2, J. 20 ०व्याहृ० G1, G2, J, K. 21 ०प्येतमि० B; ०वम Caland.

तत्र कः परोक्षीभाव इति ।
आकारटकारौ[1] वा कुर्युरिकारेकारौ[2] वा ।
एवमेकवर्णविकारैः[3] ।
इकारन्त्वेवौ[4]यिकारीकुर्युः ।
5 एतस्मिन् परोक्षीभाव उपलभ्यत इति ।" Caland ibid.
पदै[5]दैवतं व्यत्यस्य[6]ति ।
वैरूपे विरूपं[7]मचिकीर्षत् ।
अव[8]रमेवेदमहः सत् परम[9]त्यस्तं भवतीत्यपरम् ।
व्यत्यासे व्यत्यासं करिष्यामीति, स्तोत्रवशेनेति धानञ्जय्यः ।
10 यदि[10]व्यत्यस्यन् पदै[11]दैवतम् ।
पदा यत्प्रत्याहारयिष्यदिति[12] प्रत्यवेतै[13]स्तदा प्रतिहारोऽभविष्यत् ।
यद्यु[14] वै देवतायै बहिर्ऋचं प्रतिहारो[15]ऽभविष्यत् ।
अथेत्थ[16]मनतिप्रत्याहृतो[17]ऽन्तर्ऋचं भवतीति ।
अथाप्यस्य[18] छान्दसमध्यायं[19] विद्यमानमाहुः ।
15 "अथ[20] खल्वाह—'द्वादश वैरूपाणि भवन्ति ।' इति । PB. 12. 4. 17.
कस्येदं ब्राह्मणं स्या[21]दिति ।
संवत्सरब्राह्मणमित्याहुः ।
संवत्सरे द्वादशकृत्वो होतृषाम भवति ।" Caland ibid.
तस्येदं संवत्सराप्तिं वदेदिति ॥ ११ ॥

20 अथ[22] प्रथमं[23]हिष्ठीये वदति ।
हिंसितोऽन्वीक्षेत, यमिच्छेत् प्रसृज्यमानं नं[24] प्रत्येयादिति ।
तम[25]नुगायेद् दक्षिण[26]मक्ति निकुट्य सव्यं सक्थि [उद्[27]]गृह्य[28] ।

---

1 ०रगकारौ B; ०रंकारौ G1, G2, J, K. 2 ०र्युकारणकारौ G1, G2; ०रिकारणकारौ J, K. 3 ०रन्त्वे० G1, G2, J. 4 ०वाइका० B, K; ०वाईका० G1, G2, J. 5 पदादेवतं G1, G2, J. 6 स्यति is wanting in G1, G2. 7 B, K repeat रूप. 8 अपर० B; एवरामवेदमभ्यहः G1, G2; एवरामवेदमहः J. 9 परमभ्यस्तं C, K; परामभ्यस्तं G1, G2, J. 10 यदि व्यत्यस्मिन् B. 11 पदं दैवताम् B; यद० C. 12 ०ष्यदति C, G1, G2, J, K. 13 ०वेतस्तथा C, G2, J, K; ०चेतसूथा G1. 14 अद्यु B. 15 प्रतिभवि० G1, G2, J. 16 अत्थमनत० G1, G2; अत्थमनति० J. 17 ०हतोर्ऋचं G1, G2, J; ०हतोन्तर्ऋचं K. 18 ०स्यैतं छा० C, G1, G2, J, K. 19 ०मधसयं J. 20 अप्यथ C. 21 स्यादिति ··· तस्येदं ( line 19 ) is omitted by G1, G2, J. 22 अत्र B. 23 प्रथम० B; प्रथमं ये हिष्वी G1, G2, J. 24 Wanting in G1, G2, J, K. 25 ताम० G1. 26 दक्षिणमन्विति कुट्य सव्यं C; दक्षिति क्रुट्य सव्यं G1, G2, J. 27 उद् is omitted by B; द् is wanting in G1, G2, J, K. 28 ०वृह्य C.

अथायं[1] न प्रत्येयादिति ककुभ उक्थप्रणयः[2] पृष्ठच्छन्दसोऽन्वभिवृद्धिः[3]।
"अथ स्वःपृष्ठस्याङ्गिरसस्य निधनयोरानुपूर्व्ये विवदन्ते।
स्वःपूर्वमिडोत्तरेत्येके।
एवमेतयोः सामन्तयोरानुपूर्व्यं[4][5][6][7] भवति।
5 इडां वयं पूर्वां कुर्मः[8]।
एवमनयोः समानोपायादभिव्याहारं पश्यामः।
यथा[9] राजने[10] माधुच्छन्दस इति।" Caland PB. 12. 9. 19.
अथ वैराजं त्र्यनुतोदमेके[11] कुर्वन्ति।
एवं[12] छान्दसोऽध्याय इति।
10 चतुरनुतोदं वयम्।
एवमाचार्यवच[13] इति।
'तेन[14] वात्सप्र[15]ं समादध्यात्।' Dh. Dr. Ś. 40 b. 13.
"यदीदं त्र्यनुतोद[16]ं [ स्यात्[17] त्र्यनुतोदं[18] ] तत्।
यदि[19] चतुरनुतोदं[20] चतुरनुतोदं[21] तत्।" cp. Dh. Dr. Ś. 40 b. 13; 41 a. 1.
15
तदप्येवमिव ब्राह्मणं भवति—एतस्मिन् वै वैराजं[22] प्रतिष्ठितमिति।
अथ कतमे विष्टम्भा इति। cp. PB. 12. 10. 10.
देवता इत्याहुः।
देवताभिः पदानि विष्टब्धानीति[23]।
20 तदाहुः—एकादशेमां[24] देवता दशकृत्वो विष्टभ्नोतीति।
दशैताः सप्रोया[25] भवन्ति।
अपि वा[26] य एते देवतान्तरेषु पदैर्वत्स्तोभास्तान्[27] विष्टम्भानवोचत।
तैर्देवता विष्टब्धा इति।

1 अशा० G1, G2, J, K. 2 उक्थः प्र० C, G1, G2, J; उक्थ्यः प्र० K. 3 ०च्छन्दोऽन्व० C; प्र (पृ G2, J) छन्दोन्व० G1, G2, J, K. 4 स्वः is wanting in B. 5 ०न्तरयो० C, G1, G2, J. 6 ०रनु० G1, G2, J. 7 ०पूर्वं G1. 8 कूर्मः C; कुर्म्मं J, K. 9 अथा G1, G2. 10 ०जा० G1, G2. 11 ०नुतदे० B; ०नुनोद० G1, G2. 12 वं is wanting in G1, G2. 13 एव इति मार्य० G1, G2; चा is wanting in J. 14 तन G1, G2, J. 15 वाक्र प्र० G1. 16 ०तोतं B. 17 B, C omit the portion within brackets. 18 अनु० G1, G2, J, K. 19 यति G1, G2, J. 20 Wanting in C, K. 21 ०रा० G1, G2. 22 राजं C, G1, G2, J, K. 23 विष्टम्भानीति C; विष्टब्दानीति G1. 24 ०शमा G1, G2, J, K. 25 सत्यं प्रा० C, G1, G2, J, K. 26 उपायैर्यै दे० B. 27 दशस्तो० C, G1, G2, J, K.

अथैतयोरक्षरयोर्विवदन्ते[1] ।
"ऋगक्षरे स्तोभाक्षरे" इति ।
ऋगक्षर इति लामकायनः ।
तदभिव्याहारेण जानीमः—यादृशे इमे ऋगक्षरे तादृशे इमे भवत
5 इति ।
अथाप्यादित्यसदृशं वैराजम्[2] ।
यादृश इत आदित्यस्तादृशः परस्तात् ।
तद्रूपं[3] दिदर्शयिषन्[4] प्रथमे ऋगक्षरे[5]ऽन्त्याक्षरं परिहरति ।
अथाप्युच्चावचाः[6] साम[7]वृत्तयो[8] भवन्ति ।
10 यथैतत्[9] साम्न्युपेतानि[10] पुरा[11]रब्धादीनि[12] ।
तन्न्यायं[13] मन्यन्ते[14] ।
स्तोभाक्षर इति धानञ्जय्यः ।
पश्यामः[15] खलु पदानुरूपान् स्तोभानृचोऽन्वयतः[16] ।
यथैतज्जनद्वत्यामृचि[17] जनद्वान् स्तोभोऽपि[18] ।
15 सिद्धमतो हि राक्षोघ्नीषु ।
एवमिमे पीतवत्यामृचि पीतवती स्तोभाक्षरे भवत इति ।
अथाप्यादित्यसदृशं[19] वैराजम् ।
यादृश इत आदित्यस्तादृशः[20] परस्तात् ।
तद्रूपं दिदर्शयिषन्[21] पदानुरूपे[22] स्तोभाक्षरेऽन्तं[23] परिहरति ।
20 नो एतत् कंचन[24] पश्यामः ।
प्रथमे ऋगक्षरेऽन्तं परिह्रियमाण इति ।
अथैषातिजगती भावप्रत्यये[25] छन्दस्तोमरोहम्[26] अदिदर्शयिषीत्[27] ।
विराजं वा वैराजेऽहन्यचिकीर्षीत्[28] ।

---

1 आथेत° J. 2 खेरा° J. 3 रूपं B. 4 °यिष्यन् B, G1, G2. 5 °रे अन्तं प° C; °रे अन्नं प° G1, G2, J, K. 6 अथायरुच्चा°.G1, G2; अथापरुच्चा° K. 7 समावृ° B. 8 °त्तोयो G1, G2, J, K. 9 °थैकवत् C. 10 साभ्युपे° C; साम्युपे° G1, G2, K; साभ्यूपे° J. 11 पुनरा° C. 12 °धानीति C, G1, G2, J, K. 13 नान्यां C; नान्यायं G1, G2, J, K. 14 मन्येत C, G1, G2, J, K. 15 पश्यामेः G1, G2, J. 16 °चोव्यवयन्तः C, G1, G2, J, K. 17 °ह° J. 18 °भोऽप्रसिद्धवतोऽपि रा° C; °भ्योय ( °भोप G2, J ) सिद्धवन्तोऽपि रा° G1, G2, J. 19 °शां G1, G2, J, K. 20 °दृशे B. 21 °यिषीत् B; दिदिदशयिन् G1, G2, J. 22 यदा° C, G1, G2. 23 °न्तरं B. 24 °त क्ष्वच G1, G2, J; °तद्वचनं K. 25 °भागप्रत्यवाये B; भागप्रत्ययाये K. 26 म is wanting in B, J, K. 27 °दर्शयिशिषोत् J. 28 °कीषत् B, G1, G2, J.

वि[1]राडियं पञ्चाशदक्षरा, बृहत्यावुत्तरे, तेन बृहतीभ्योऽनपेतं भवती-
त्य[3]नपेतं भवतीति ॥ १२ ॥

नै[4]वमः पटलः

अथैतासु महाना[5]म्नीषु विप्रतिपादयन्ति[6]—
5 इ[7]दं शाक्करमिदमशाक्करमिति ।
अशा[8]क्करी प्रथमा द्विपदा, शा[9]क्कराणि त्रीणि पराणि पदानि ।
धातुरशा[8]क्करः पञ्चाक्षरः ।
स एष कताकृतो भवति ।
वत्सोऽशाक्करोऽष्टाक्षरः ।
10 [ ऊधः[8] ] शाक्करमष्टाक्षरम् ।
अभ्यासवत् तस्यं[10] त्र्यक्षरान् पं[11]दादीन् प्रतिनोदां[12] इत्याचक्षते ।[13]
पुरुषोऽशाक्करः पञ्चाक्षरः, शाक्कराण्येव त्रीणि परा[14]णि पदानि ।
अध्यासोऽशाक्करोऽष्टाक्षरः ।" Say. PB. 13. 4. 2.
तस्य प्रस्तावय[15]ति, न प्रतिहारयति[16] ।
15 एतेनैवोत्तरयो[17]: शाक्करा[18]णि चाशाक्कराणि [च[19]] व्याख्याता[20]नि ।
त्र्यध्यासोत्तमा[21] शक्क[22]री भवति ।
अध्यासा[23]: किमर्था इति ।
लोकोक्ताः शक्क[24]र्यः साध्यासा इमे लोका भवन्ति ।
अग्निर्वायुरिति पूर्वयोः ।
20 आदित्यश्चन्द्रमा इत्युत्तरस्य[25] ।
तस्माद् त्र्यध्यासोत्तमा शक्करी भवति ।
अथ खल्वाह—"त्र्यो[26]पशाः सꣳस्तुता भवन्ति" इति । PB. 13. 4. 3.
कस्येदं ब्राह्मणꣳ स्यादिति ।
उत्तमाया त्र्यं[27]ध्यासाया इत्याहुः ।

---

1 विराजडियं G1, G2, J. 2 पञ्चादशद० B; पंचावराक्षरा G1; पञ्चादशक्षरा G2, J; पञ्चादशाक्षरा K. 3 ०भवतीत्यमषेतं G1, G2, J. 4 In B only. 5 ०म्नीसु G1, G2, J. 6 ०न्ती C. 7 दशाक्षरमिदम० C. 8 श० B. 9 Wanting in B 10 तस्या G1. 11 पादा० C. 12 प्रतीतोदा C, G1, G2, J; प्रती० K. 13 S omits this line. 14 Wanting in C. 15 ०तावयती K. 16 ०हारयति K. 17 ०रायो G1. 18 ०रा G1, G2. 19 B omits च. 20 ०ख्यानि G1, G2. 21 ०मात्तमा G1. 22 ०शा० C, G2, J; साकरी G1. 23 ०सा C; ०सꣳ कि० G1, G2, J; ०सं कि० K. 24 शा० C, G1, G2, J. 25 ०त्तमस्य C, J, K. 26 त्र्यौपशाः C. 27 द्व्यध्या० G1.

एकाध्यासे पूर्वे[1] द्व्यध्यासोत्तमा ।
तस्या[2] इदमभिनन्दं[3] ब्राह्मणं वदेदिति ।
अपि वा समस्तब्राह्मणमेव स्याद् ।
द्व्योपशे[4] पूर्वे[5] द्व्योप[6]शोत्तमेति ।
5 ऊधसोऽभ्यासब्राह्मणं मन्य इति वार्षगण्यः ।
एवमिव ब्राह्मणं भवति—"इंडे[7]ऽभितोऽथकारं तस्माच्छृङ्गे तीक्ष्णीयसी[8] स्तूपात्[9] ।" इति । PB. 13. 4. 4.

उपशोक्तानि[10] शृङ्गाणि भवन्तीति ।
अथ खल्वाह—"दिशः[11] पञ्चपदा[12] दाधार[13]र्त्तून् षट्पदा छन्दांसि[14] सप्तपदा पुरुषं द्विपदा[15]" इति । PB. 13. 4. 2.
10
"प्रतिलोमं वदन्ति[16] ।
पादतः[17] छिद्रोहो भविष्यतीति ।
सप्तपदा प्रथमा शक्वरी, षट्पदा द्वितीया ।
यद्धि[18] प्रथमाया उत्तमं[19] पदं तद् द्वितीयायाः प्रथमम् ।
15 प्रगाथः सानु[20]पृष्ठ[21]मिति पञ्चपदोत्तमा ।
यद्[22] द्वितीयाया उत्तमं तत् तृतीयायाः[23] प्रथमं च द्वितीयं च ।" Say. ibid.

नवपदाः पुरा बभूवुरिति लामकायनः ।
ताभ्यो[24] रेवत्यो[25] निर्मिताः ।
20 द्वे प्रथमायाः पदे, त्रीणि द्वितीयायाः, चत्वारि तृतीयायाः ।
तदप्येवमिव ब्राह्मणं भवति—"सिमाभ्यो[26] ह्यधिरेवत्यः प्रजायन्ते ।" इति । PB. 13. 9. 4.
नवपदा एव भविष्यन्तीति, ऊधश्चाभ्यस्यति[27] पदं चानुसंहरति ।
अथापि नवपदा एवाभिरूपतरा[28] न विपर्याये[29] त्रिणव इति ॥ १३ ॥

---

1 पूर्वे द्व्यध्यासो is wanting in G1, G2. 2 तस्मा G1, G2, J. 3 ०नन्दां B; ०नन्दा G1, G2, J, K. 4 Wanting in C; ०पदेशे G1, G2, J, K. 5 Wanting in C. 6 व्योप० C; द्व्योपदेशो० K. 7 इमडे० G1, G2. 8 ऽतितिष्णयसि B. 9 ०यात् C. 10 ०शौक्ता० G1. 11 दश B. 12 पञ्चदा B. 13 दाधार is wanting in B. 14 ०दांसि C; ०दंसि G1. 15 ०पदेऽपि । G1, G2. 16 वदति Cक; भवति Cख, G1, G2, J, K. 17 वादत० G1, G2, J. 18 यादि G1; याद्धि G2, J, K. 19 उत्तमं पदं ··· द्वितीयाया ( line 16 ) is wanting in K. 20 साधु० B. G1, G2, J. 21 ०ष्ठा० G1, G2. 22 अथ B; य G1, G2, J. 23 द्वितीयायाः B. 24 ताभ्या G1, G2, J. 25 ०वत्या G1, G2, J. 26 समा० B. 27 ०स्य C, G1, G2, K; स्यति is wanting in J. 28 ०रूप्यन्तदनरा G1, G2, पान्तदरा J. 29 ०र्यायोऽहिङ्कृण० B; ०र्ययेति त्रि० G1, G2, J, K.

# अथ चतुर्थः प्रपाठकः

अथ खल्वाह—"गायत्रमयनं भवति, त्रैष्टुभमयनं भवति, जागतमयनं भवति[1]।" cp. PB. 13. 4. 10

किमयनꣳ स्यादिति।
ऊधसि विकारो दृष्टे[2] इति[3] गौतमधानञ्जय्यौ।
5 [यँ][4] एष[5] मध्य ऊधसोऽथकारस्तꣳ स्वरिति कुर्यात्।
तद्गायत्रमयनम्।
अथेति त्रैष्टुभम्।
इडेति जागतम्।
तदाहुः—विकृतो[6]ऽथकारः, अविकृतस्य को विकारः, यँ एवाभित[7] इडे[8] ते विकुर्यादिति।
10
सर्वमेवोधं[9]विकारार्थमागच्छतीत्यपरम्।
सर्वमेवोधर्विकुर्यादिति।
अथाप्याहुः—अविकृतमेवोधः स्यात्, अन्त्येडांमेव[11] विकुर्यात्[12], अन्त्याख्यानि कर्माणीति।
15 अथाप्याहुः[13]—अविकृतैवान्त्येडा स्यात्, यदेवँ[14] प्रागन्त्येडायास्तद्विकुर्यात्, तद्व्ययनं भवतीति।
ते[15] कस्य हेतोर्जागतमयनꣳ समारप्स्यन्तीति[16]।
नेदं[17] जागतमिति शाण्डिल्यायनः।

1 In C only. 2 ०तीति C, G1, G2, J, K. 3 दृष्टम G1, G2, J. 4 ति is wanting in G1, G2. 5 Wanting in B. 6 ए is wanting in G1, G2. J. 7 ०र्वितो यथाकारः G1, G2; वि-तोयथोकोरः J. 8 ये चाभि० C; यो वाभि० G1, G2, J; ये वाभि० K. 9 ०डेति वि० C, G1, G2. 10 ०धषुका० B. 11 अन्तेडा० G1, G2. 12 कुर्यादन्ता० C; कुर्याकस्यदन्ता० G1, G2, J, K. 13 अथापार वि० G1; अथाप्यार वि० G2. 14 ०वं G1, G2, J, K. 15 एकस्य हे० G1, G2, J, K. 16 ०न्तेति C, G1, G2, J, K. 17 तदिदं B.

यानि त्व[1]त्र निधनानि तानि स्वरिति कुर्यात् ।
तद् गायत्रमयनम् ।
अथेति[2] त्रैष्टुभम् ।
इडेति जागतम् ।
5 अथेदं मिश्रनिधनꣳ सर्वाभिप्रायम्—
यथेदमधीमह इति ।
ऊर्ध्वꣳ शक्वरीभ्यः पञ्च[3] पुरीषपदानि पञ्चाक्षराणि, तेभ्यः प्रस्तावयति, न प्रतिहारयति, न शश्वदेकेऽध्यासपुरीषपदानां प्रस्तावयन्ति प्रतिहा[4]रो[5]-पायान् प्रस्तावोपेयादिति ।

10 प्रस्तावयामो वर्य[6]म् ।
अन्यदिदꣳ शक्वरीभ्यः ।
तत्कथ[7]मप्रस्तुतं क्रियेतेति[8] ।
सꣳरोधात्तु नू[9]नं प्रतिहारोपायात् ।
ते खल्विमे बहवः प्रस्तावाः ।
15 कथमोङ्कार इति ।
प्रस्तावनिमित्त ओङ्कार इत्येके ।
प्रस्तावे प्रस्ताव ओङ्कारेणाददीत ।
अथाप्याह—रसो वा एष साम्नां[10] यदोङ्कारः[11] ।
नैतेनातिरेकोऽस्तीति ।
20 प्रथम एव प्रस्ताव इत्यपरम्[12] ।
स्तोत्रीयाया एतान्यङ्गानि भवन्ति ।
[13]सकृत्तु[14] खलु स्तोत्रीयाया ओङ्कारो भवति ।
अथापि परिचष्ट ऊर्ध्वं प्रतिहारादोङ्कारेणादानम् ।
अथाप्येवमन्यैः सामभिः समाधिरिति ॥ १ ॥

25 ते खलु शश्वदेके पुरीषप[15]दैः प्रतिपद्यन्ते ।
पञ्चविधेन पञ्चमस्याह्नः पृष्ठं प्रतिपत्स्यामह इति ।
अथाप्येवꣳ शक्वर्यवसानꣳ स्तोत्रं भविष्यतीति ।
अथाप्याह—"गोष्ठः पुरीषम्[16]" इति कृत्वा वै गोष्ठं पशूनुपाकुर्वन्ति । PB. 13. 4. 13.

---

1 वत्र G1, G2, J. 2 ॰थ्येति C. 3 Wanting in G1, G2. 4 ॰रु॰ B. 5 ॰हारा॰ B. 6 ॰याम् G1, G2, J. 7 कथं प्र॰ B; कथमस्तु॰ G1, G2, J, K. 8 क्रियेतेति G1, G2. 9 नू प्र नं G1, G2, J. 10 साम्नां G1, G2. 11 यदोका॰ G1. 12 ॰रः C. 13 G1, G2, J add स. 14 सकृन्तु C, G1, G2, J. 15 ॰पादैः G1, G2, J. 16 ॰ष B.

अन्ततो वयं कुर्मः ।
एवं च छान्दसोऽध्यायः ।
अपि चैवं[1] पञ्चविधं पञ्चमस्याहुः पृष्ठ[2]मनुसं[3]स्थास्यत इति ।
यद्वेतद् गोष्ठं[4] पुरीषमिति, इष्ट्वा[5] वै[6] पशून् गोष्ठं कुर्वन्ति ।
5 अथापि[7] पश्चार्धसेविपुरीषमिति ।
तत्खलु सर्वाभिः सह स्यादित्याहुः ।
तृचदृष्टय इमा भवन्ति लोकदृष्टयः ।
तदिदमन्तेऽनुषङ्गस्थाने समाम्नातं भवति ।
अथाप्येवं सर्वास्वि[8]स्य पुरीषा भविष्यन्तीति ।
10 व्यवायश्चाभविष्यदतिगुरू[9] च ।
[ अथ वै विष्टावान्तेषु विष्टावसमा[10]धय इति ।
व्यवायश्चैव गुरू च । ][11]
अथ वै पर्यायान्तेषु[12] पर्यायसमा[13]धय इति ।
व्यवायश्चैव गुरू च ।
15 अथ वा[14] उत्तमामेवानुचरेत् ।
एतया हि सहोत्पन्नं[15] भवतीति ।
व्यवायश्चैव गुरू च ।
सकृदन्ततः स्यादित्याहुः ।
एतच्चासां[16] लघिष्ठम् ।
20 अपि चैवम[17]व्यवायः ।
अथापि परिनिष्ठायाशिषमुदित्वान्तेऽनुज्ञां वदिष्याम इति ।
अथापि पश्चार्धसेविपु[18]रीषमिति, तासां धर्मो नियुज्यते—
न व्याहरेत्, नाश्नीयात्[19], अभिनद्धाक्षं[20] आसीत ।
प्र[21]वेकोऽयं ब्रह्मणो[22] भवति[23] ।
25 तन्नो ह प्रतिलभ्य प्रदेहेत्[24] ।
एतमेवाहं ब्रह्मचर्यं[25] धर्मम[26]नु मन्य इति गौतमः ।

---

1 वैवं G1, G2, J. 2 षष्ठम० G1; षष्ठः म० G2, J. 3 ०प्यत इति। C; ०स्यति। G1, G2; ०स्य इति। J, K. 4 ०ष्ठमपु० B. 5 इष्या B; इष्ट्वी G1, G2; तांष्ट्वी J. 6 B adds व. 7 अपि G1, G2. 8 सर्वाः सपुरीषा भ० C; सर्वास्व पुरीषो भ० G1, G2, J, K. 9 ०रु C, G1, G2, J 10 ०सधय G1, G2, J. 11 अथ ··· च wanting in B. 12 ०न्ते G1, G2, J. 13 ०सामाधाय G1, G2. 14 या B. 15 ०त्पनन्नव० G1, G2, J. 16 ०त सां G1; ०त-सां G2, J; एतश्चासां K. 17 चैव व्य० G1, G2. 18 ०र्द्धीसावि० K. 19 नासीतयाया B. 20 ०द्धाक्षत्प्रासीत C; ०द्धाक्षि भसीत G1, G2. 21 प्लवे० C. 22 ब्रा० B. 23 ०न्ति G2, J. 24 ०देहेत G1, K. 25 ०र्यंध० C. 26 धर्मं C, G1, G2, J, K.

तत्त्वे[1]तिगुरु वाभविष्यत् ।
अपि च नो[2] ह मरणाशङ्कमिमास्तु स[3]र्वच्छन्दस्या भवन्ति ।
आसा[4]मेव चरतः सर्वच्छन्दसामिव व्रतं चरितं भविष्यतीति ।
अथाप्याहुः—यानि रूपाणि ब्रह्मचारी न पश्यति, या[5]न् रसान्नाश्नाति,
5 ल[6]ब्ध्वा हैनान् समावृ[7]त्य भवति ।
तमेतद्रूपेभ्यश्च रसे[8]भ्यश्च समव[9]रुन्धन् मन्यत इति ॥ २ ॥
तासां खलु त्रीन् संवत्सरान् ब्रह्मचर्यं चरेत् ।
कृष्णव[10]स्त्रः कृष्णभक्ष आचार्याधीनस्[11]तपस्वी तिष्ठेद्दिवा[12]सीत नक्तम् ।
सायं प्रातरुदकोपस्पर्शी सर्वभूतेभ्यः पन्थानम[13]ददद्वर्षति ।
10 शरणां नातीयात् ।
नित्यꣳ स्नि[14]ग्धवासा बुभू[15]षेत् ।
उद[16]र्कसाधवो हि महानाम्न्य इति ।
एवं खलु[17] चरतः कामवर्षी पर्जन्यो भवति ।
उदकोपस्पर्शनं[18] किमर्थमिति ।
15 अ[19]बुक्ताः शक्कर्यस्ता[20] एव प्रविशन् मन्यत इति ।
अपि वा पशूनामेवं[21] पायना[22]र्थꣳ स्या[23]त्, पशूक्ताः श[24]क्कर्य इति ।
स[25] खलु प्रथमाꣳ स्तोत्रीयामनुगाप्या[26]होरात्रे वाग्यतः परिणद्धात्त आ[27]सित्वा
तस्या[28]ꣳ संवत्सरं ब्रह्मच[29]र्यं चरेत् ।
एवमेव द्वितीयायाः ।
20 एवं तृतीयायाः ।
ते खलु शश्वं[30]देके प्रथमत एव परिणह्यन्ति ।
प्रथमत[31] एव यथा न प्रध[32]क्ष्यतीति ।
अध्यासं प्रत्येके ।

1 तत्त्वेऽति० G1, G2, J, K. 2 नोहं रणाशङ्कमिमाः B; ०मिमस्तु C. 3 स्वसर्व० B; सर्वं० G1, G2, J, K. 4 ०सां मे C, G1, G2. 5 तान्यासन्ना० C; तान् G1, G2, J, K. 6 लब्धा B, G1. 7 ०दृ० G1, G2. 8 Wanting in K. 9 समत्वकुल B; समव० J. 10 Wanting in G1. 11 ०नत० G1, G2, J. 12 ०द्विवा० G1, G2. 13 ०मान्दयद्व B; ०मददृद्ध० G1. 14 सन्दिग्ध० B. 15 क्षुभू० G1. 16 ०के सा० G1, G2, 17 G1, G2, J add तु. 18 ०नी G1, G2. 19 अनुक्ताः C, G1, G2, J, K. 20 ०र्य इति खस्ता G1, G2. 21 ०मे G1, G2. 22 ०सार्थꣳ K. 23 G1, G2, J add पश्वर्थꣳ. 24 शा० G1, G2. 25 Wanting in C, J, K. 26 ०गाया० C; ०गाय्या० G1, G2, J. 27 असि० G1, G2, J. 28 ०स्याः B, C. 29 ०चर्थं C. 30 शश्वादते G1, G2, J; ०देते K. 31 ०मन्त B. 32 प्रवक्ष्य० C, G1, G2, J, K.

अध्यासं प्रत्यध्यसिष्यामह[1] इति ।
अपि[2] तं[3] प्रातरभिवीक्षयन्ति, योऽन्यं[4] प्रधक्षन्तं मन्यन्ते, योऽग्निं वत्समादित्यम् ।
अपोऽ[5]भिव्यख्यमित्यपः ।
5 ज्योतिरभिव्यख्यमित्यग्निम् ।
पशूनभिव्यख्यमिति वत्सम् ।
स्वरभिव्यख्यमित्यादित्यम्[6] ।
अथाप्येतं[7]दिवैवैता[9] भवन्ति ।
आप इवाग्निरिव वत्स इवादित्य इवेति ।
10 अथ खल्वाह—"पार्थुरश्मं[8] राजन्याय ब्रह्मसाम कुर्यात्, बार्हद्गिरं ब्राह्मणाय, रायोवाजीयं वैश्याय" इति । PB. 13. 4. 18
पार्थुरश्मं[10] चेद् ब्रह्मसाम स्यात्, बार्हद्गिरस्यैतं[11]दन्तु कुर्यात् ।
यद्यु वै रायोवाजीयमेते[12] बार्हद्गिररायोवाजीये, स स्तोत्रीयेऽन्योन्यस्य स्थानं व्यतिहरेत् ।
15 कथमुभयेषु[13] समवयत्स्विति[14] ।
भूम्नो[15] वंशं[16] नयेद्, गृहपतेरित्येके ।
अपि [ वा[17] ] बार्हद्गिरमेव कुर्यात् ।
नित्यं च श्रेष्ठ[18]वर्णीयं चेति ।
वैश्वामित्रस्तोत्रीये षोडशिना स्तूयमान आष्टमिकमुक्थ्यं[19]स्तोत्रीयं प्रतिनि-
20 दध्यात्, असं[20]ञ्चाराय वीङ्कस्तोत्रीये वसिष्ठस्य प्रियमनुकल्पयेद् वसिष्ठस्य प्रियमनुकल्पयेत् ॥ ३ ॥

दशमः[21] पटलः

अथ षष्ठेऽहनि "रेवतीषु वारवन्तीयं पृष्ठं भवति ।" PB. 13. 10. 4.
तदेके प्रत्यक्षं ब्रुवते ।
25 एतत् प्रकृतौ दृष्टं भवतीति ।
अथापि यद्रेवत्यः पृष्ठमभविष्यन्[22] पवमान आसां धर्ममकरिष्यन्निति[23][24] ।

1 ०ष्या B; ०ष्याम G1, G2, J, K. 2 अपि is wanting in G1. 3 च B. 4 यान्य प्रधक्ष० B; यान्य प्रवक्ष्यं C. 5 एवोभि० B; आयाभि० G1, G2, J. 6 म् । 7 ०तानि B. 8 पार्थ० B. 9 अथाप्येतदिवैवैता is wanting in G1, G2, J, K. 10 पार्थ० B, G1, G2, J. 11 ०स्यैवर्षु C. 12 श्या is wanting G1, G2, J. 13 ०ये G1, G2, J. 14 समावयस्थिति G1, G2; C, G1, G2, J, K add एव. 15 भुम्नो C. 16 वधूशं G1, G2, J, K. 17 Wanting in समावयत्स्थिति J. 18 G1, G2 omit श्रेष्ठ. 19 ०मुक्थ० C, K. 20 संचा० C. 21 In B only ( here ends the 1st daśati of the Paṭalas ). 22 पृष्ठः मा भ० G1, G2. 23 ०ष्यत् C, G1. 24 ०ष्यदिति B, K.

अथाप्ये[1]नुरू[2]पाग्निष्टोमसाम्नि वारवन्तीयस्यै[3]वानुरूपं कल्पयतीति ।
रेवत्य इत्यौष्ट्रा[4]क्षीरेवतीषष्ठानाꣳ सृष्टिब्राह्मणं भवति ।
तासां धर्मो नियुज्यते—"तद् गवां घोषोऽन्वसृज्यत ।" इति । PB. 7. 8. 13; Dh. Dr. Ś. 6. 1. 6.
5 अथापि प्रतिपद्भिः पृष्ठानि संवर्णयन्[5] रेवतीरेवाभिसंवर्णयति षष्ठे[6] च विश्वजिति च ।
अथापि पृष्ठ[7]ꣳस्तोमात् पृष्ठानि च्यावयन् रेवतीरपि च्यावयति ।
अथाप्यनुगृहीतपृ[8]ष्ठे रेवतीरेवानुगृह्णातीति ।
अथापि परोक्ष[9]पृष्ठोपाङ्[10]क्त्यपृष्ठयोरनुगृहीतपरोक्षं इति वारवन्तीयमेवानु-
10 गृह्णाति ।
यद्वेतदेतत् प्रकृतौ दृष्टं भवतीति, ब्राह्मणेनैव कारणं व[11]दति ।
यद्वेतत् पवमान आसां धर्ममकरिष्यन्निति, उपा[12]स्तं पृष्ठत्वꣳ स्तोत्रीयेण मन्यते[13] ।
यद्वेतद् वारवन्तीयस्यैवानुरूपं कल्पयतीति[14], उक्तं वारवन्तीयस्य
15 परोक्षम् ।
तदेतद् रेवतीपरोक्षमेव भवतीति ॥ ४ ॥
अथ खल्वाह—"प्रायणतो द्विपदाः कार्या३ उदयनता३ इति ।" PB. 13 12. 1.
कथं प्रायणतः स्युरिति ।
20 प्रथमेऽहनीत्याहुः ।
ए[15]तद्धि प्रायणं भवति ।
अथापि दृश्यते प्रायणीयस्योक[16]थ्यत्वं यथा[17] चतुर्विꣳशस्य ।
तथा षष्ठस्याग्निष्टोम्यं यथाभिप्लविक[18]स्येति ।
द्वितीय इत्यप[19]रम् ।
25 एतदुक्थानां प्रायणं भवति ।
अथाप्येवमुक्थव्यतिहारः सिध्यति ।
अथाप्येवं प्रकृतिसविधतरं भवतीति ।
"क[20]थमावृत्ते पृष्ठ्ये सꣳस्थाधर्मा" इति । Ārs. K. V. 44 a.

---

1 ॰प्या॰ C. 2 रू is wanting in G1. G2, J, K 3 ॰स्यानु॰ B. 4 ॰द्राक्षी॰ G1, G2, J, K. 5 ॰यन नेवती॰ G1, G2, J, K. 6 षष्ठी J. 7 पृष्ठा॰ C. 8 ॰तपष्ठे G1, G2 J. 9 क्ष्य for क्ष in G1, G2. 10 ॰पाङ्क्य C, G1, G2, J, K. 11 Wanting in G1, G2. 12 उपास्तं B. 13 ॰न्यत् K. 14 ॰यन्तीति B. 15 एव त॰ G1, G2, J, K. 16 ॰कथ्यत्वं G1, G2, J, K. 17 Wanting in C. 18 ॰क C; इति is wanting in G1, G2, J, K. 19 ॰राम् G1, G2, J. 20 कतमा॰ C; कथमाह इति G1, G2, J.

आवृत्तस्याप्यन्त एव स्युरित्येके—यदा षडहः सन्तिष्ठत इति हि भवतीति।
अथापि षडहधर्मा इत्याचक्षते।
नचैतत् षष्ठस्य साधीयो[1] यथो च प्रथमस्य।
"त्रयस्त्रिंशस्य त्वेव संस्थायामित्याचार्याः[2]।" Ārṣ. K. V. 44 a.
5 स[3] एतदावृत्ते[4]रवयवः।
य इत उपक्रमधर्मः स परस्तात् संस्थाधर्मः।
यः परस्तात् संस्थाधर्मः[5] स इत उपक्रमधर्म इति।
अथापि य एनानावृत्तस्यान्तं परिहरेत् सर्वाण्येव नूनं सोन्[6]तलक्षणान्या-
वृत्तस्यान्तं परिहरेदिति ॥ ५ ॥

10 त्रीणि दशरात्रस्य विच्छिन्नानीति शाण्डिल्यः।
पञ्चममभितो द्वे, षष्ठाद्[7]ूर्ध्वमेकम्।
तेषां सन्तानाय सन्तनी[8]ति।
अनुपूर्वं "सूक्तानुरूपांश्छन्दोमान् करोति" पृष्ठ्यं[9]च्छन्दोमानामकृत-
काराय। Ārṣ. K. V. 28 b.

15 अथाप्य[10]कृताः।
[ अतः[11] ] प्राक् सूक्तानुरू[12]पतेति।
अथापि प्रजाप[13]तिसंस्तावेषु प्रजास्थानमभ्यवर्द्धयिषीत्[14]।
"बृहद्रथन्तरे पृष्ठे[15]" नहि षाडहिकान्यनुभवन्ति। Ārṣ. K. V. 28 b.
नो व्यलु[16]लुप्सीत्।
20 अथापि शिथिलोक्ता
तेषां प्रत्यक्षाभ्यां पृष्ठाभ्यां दृढीभावो भविष्यतीति।
अथापि तम उक्ताः।
ते एते ज्योतिषी[17] साम्नाम्[18]।
स कस्य हेतोः।
25 बृहत्पूर्वं युक्त इति।
कृतयोः क्रियमाणयोरेषा कृता[19]कृतिः।
अथापि स्तोमं[20]प्रत्यवाये पृष्ठतो रोहमदिदर्शयिषीत्।

---

1 साधियो C; साध्ययो G1, G2, J, K. 2 ॰र्यः B. 3 Wanting in C, G1, G2, J, K. 4 ॰दावृत्ते रूपम् C, K; ॰दारुपवृत्तौ ( त्ते J ) रूपम् G1, G2, J. 5 ॰र्मैः B. 6 सोक्षोपणन्यावृस्यान्तं B; सोन्तलक्षणां न्या॰ G1, G2. 7 षष्ठे पूर्वमेकम् Cक. 8 ॰नी B. 9 पृष्ठ॰ G1, G2; पृष्ठ्यः छ॰ K. 10 ॰प्यप्रकृतवादः C. 11 Wanting in B, C. 12 ॰पयतेति C; ॰पत्येति G1. 13 प्रज्ञापयति॰ C; प्रजाति॰ G1, G2, J, K. 14 ॰यिष्यन् B. 15 षष्ठे J. 16 व्यलोलु॰ B. 17 ॰षि B. 18 ॰म्ना B. 19 कृत॰ C, G1, G2, J. 20 ॰मः प्र॰ G1.

वर्ष्मोक्तं[1] बृहदिति ।
अथापीदं व्रतस्थानं[2] बृहदाप्तितया व्रतस्य[3] मानसंतया[4] ते व्यत्यासं[5] प्रयुङ्क्ते ।
तत् कुशलं वाङ्निधनानि माध्यन्दिना[6]न्त्यान्यैडा[7]न्यार्भवान्त्यानि[8] सवन-
च्छन्दसोरनुग्रहाय ॥ ६ ॥

5 "अर्कपृष्ठान्[9] पैङ्गिनो[10]ऽधीयते[11] ।
सैषां[12] छन्दोमानां पृष्ठभक्तिः[13] ।
तेषां पृष्ठत्वे तिष्ठमानो[14] न साक्षात् करोति ।
बृहद्रथन्तरे वा[15] निकामयमानः पूर्वार्भवे[16] करोति ।
एवं नेदीयसी पृष्ठानाम् ।
10 'सप्तमेऽहनि[17] कृताकृतो भवत्यब्राह्मण[18]विहितत्वात्[19] ।' Sāy. PB. 14. 5. 12; cp. Dh. Dr, Ś. 9. 3. 4.
कर्तव्य इत्याचार्याः[20] ।
छन्दोमानां चार्कसमाधिः[21] ।
यथा चैतत्[22] [23]पैङ्गिनोऽधीयते छन्दोगाश्चाप्येनमेकेऽधीयते[24] ।" Caland PB. 14. 5. 12.
15
अथापि सꣳरोधेऽनुगृह्यते, यथा त्रिवृति दशरात्र इति ।
नवमेऽहनि समे स्तोमे सति साध्यासां[25] बृहतीं करोति ।
कस्य हेतोरिति ।
साध्यासा पूर्वेऽहनि कृता ।
20 स एवमप्रत्यवायः[26] ।
अथापि बह्वियं चरति ।
तस्याः पथ्यतामपिपादयिषीत्[27] ।
दाशरात्रिकाणां[28] द्रव्याणां पथ्याख्या[29] ।
अथाप्येतस्यामेवैतꣳ[30] सामयोगꣳ साधीयो[31] ह्यश्नुत इति ।

1 वर्ष्यो० C, G1, G2, J, K. 2 वृ० C, G1, G2, J. 3 वृ० G1. 4 ०सता B; ०सं तया G1, G2, J, K. 5 वृत्यासं G1; व्रत्यासं G2, J, K. 6 ०मादितान्त्यार्भ० J. 7 ०नान्यन्त्या० C. 8 ०न्त्या० B. 9 ०ष्ठानि K. 10 यै० C, G1, G2, J, नैगिनो० K. 11 ०न्ते G1, G2, J, K. 12 ०षां J. 13 ०विभ० Caland. 14 ०नो (?) Caland. 15 वा (?) Caland. 16 ०चार्भवे C, G1, G2, K; Caland suggests here पूर्वास्त्वार्भवे. 17 ०न्यर्कः कृ० S. 18 ०ब्र० J. 19 ०त्वा C, G1, G2. 20 ०र्यः G1, G2, J, K. 21 चर्क० G1, G2, J. 22 चैतान् C. 23 यै० C, G1, G2; नैगिनो० K. 24 ०क धी० G1, G2, J, K. 25 साध्यानां K. 26 ०वम प्रत्ययवा० C; ०वं प्रत्यवा० B. 27 पर्त्थतमापि० B; ०मापि० C, ०मापिदयितीत् G1, G2, J. 28 B adds धर्माणां. 29 पार्थाख्या B; ०ख्यातं G1, G2, J. 30 अ is wanting in G1, G2, J. 31 [illegible] C, K; [illegible] G1, G2; ०योम्युत J.

ऐकक़ुभस्य निधने विवदन्ते ।
पदनिधनमित्येके[1] ।
यादृशे इमे ऋगक्षरे तादृशे इमे भवत इति ।
बहिर्णिधनमित्यपरम् ।
5 बहिर्णिधनस्थाने च युज्यते ।
अपि चास्य निधनवादो भवति ।
बहिर्णिधनानामुत निधनवादा भवन्ति[2] ।
अथाप्याप्यते[3] ज्योतिर्विचारान् ।
यत् पदनिधनमभविष्यदित्यरेक्ष्यत[4] ज्योतिष्टोमीं मात्राम्, नास्य[5] प्रति-
10 निष्कारं[6] कल्पयति[7] बहिर्णिधनस्येव सत इति सत इति ॥ ७ ॥

प्रथमः[8] पटलः

अथ दशमेऽहनि चतुर्ऋचꣳ होतुराज्यꣳ समामनामः ।
तस्य मध्यमे भवतः—तानूनपाती च नाराशꣳसी च ।
द्वयानि कुलानि भवन्ति—तानूनपातीनि[9] च नाराशꣳसीनि च ।
15 तानूनपातीं[10][11] तानूनपातेषु कुर्यात्, नाराशꣳसीं नाराशꣳसेषु ।
वसिष्ठशुनका अत्रयश्च वाध्र्यश्वाश्च[12] कण्वाश्च सङ्कृतयश्चैतानि नाराशꣳसानि । cp. LŚ. 6. 4. 13.

अथेतराणि तानूनपातीनीति ।
कथमुभयेषु[13] समवयत्स्विति ।
20 भूम्नो[14] वशं नयेत्, गृहपतेरित्येके[15] ।
अपि वा तानूनपातीमेव कुर्यात् ।
एषा भूयिष्ठानां कुलानां भवति ।
अपि चैतामेवैकेऽधीयते ।
अथाप्येषा समारब्धतरा भवतीति ।
25 अथ मानसम् ।
दशमस्य भवती ३ सर्वस्यांहो[16] एव दशरात्रस्येति ।

---

1 ०धनानामि० C. 2 ०न्तीति C, G1, G2, J, K. 3 ०वद्येते G1; ०पद्येते G2, J, K. 4 ०ष्यद् यत् परे० C; ०ष्यद् यत् परोक्ष्य० G1, G2, J, K. 5 न्ययस्य B. 6 प्रतिष्का० B. 7 J adds नास्य. 8 In B only. 9 G1, G2, J omit तानूनपाती… नाराशꣳसीनि च (line 14). 10 तानूनपातीनि…च wanting in C. 11 ०तिं B; ०तं C. 12 वध्यूक्षाश्वक० C, G1, G2, J. 13 ०ब्वस० B, J. 14 भूम्नौ C. 15 ०प्रतिरि० G1, G2, J. 16 ०हौ G1, G2, J, K.

दशमस्येत्याहुः—
नैनं[1] दशमेनाह्ना विप्रयुज्यमानं पश्यामः ।
अथापि दशमधर्मा इत्याचक्षते ।
अथापि सार्द्ध[2] मानसेन[3] विराड[4]नुष्टुप्सम्पत्तिसिध्यति ।
5 अथाप्याहुः—सर्वमेवेदमहः पुरा मानसं[5] बभूव ।
तदतिगुर्विति[6] ।
वाचꣳ समापादयाञ्चक्रुरेकस्तोत्रं चित्तं[7] धर्ममनु प्रब्रुवन्[8] स्थास्यतीति ।
अथापि वागुक्तमहः[9] ।
संयुक्ते वाङ्मनसे[10] भवत इति ।
10 न दशमस्येत्यपरम् ।
उपरिष्टात् पत्नीसंयाजानां भवति[11] ।
यन्नूनं दशमस्याभविष्यत् पुरस्तात् पत्नीसंयाजानामभविष्यदिति ।
अथाप्यत्र त्रिकस्तोमः[12] ।
कथं त्रयस्त्रिꣳशं कृत्वा समानेऽहनि त्रिकं पर्यवैष्यदिति[13] ।
15 अथाप्यत्र गायत्रं[14] छन्दः ।
कथं त्रयस्त्रिꣳशदक्षराः कृत्वा समानेऽहनि गायत्रं[15] पर्यवैष्यदिति ।
अथापि[16] गायत्रं साम ।[17]
कथमग्निष्टोमसाम कृत्वा समानेऽहनि गायत्रं पर्यवैष्यदिति ।[17]
अथापि वागुक्तमहः ।
20 अन्या[18] वाग्भवत्यन्यन्मनः[19] ।
नास्य भूयान्[20] दशमेनाह्ना सम्बन्धो[21] यथो[22] च[23] प्रथमेनेति काषटवः ।
सर्वं वैतद् दशरात्रस्य[24], सर्वो वैतस्य दशरात्र इति शाण्डिल्यायनः ।
आयामवाचं दशकमं मनो[25] व्याप्नुवाम ।
न[26] संयुक्ते वाङ्मनसे भवत इति ॥ ८ ॥
25 अत्र[27] गायत्रीः करोति ।

---

1 नैतद् Cक, K; नैव Cख, G1, G2, J. 2 साध्यात् B. 3 ०मासेन G1, G2, J. 4 ०राद् स० C, G1, G2, J, K. 5 मानं G1, G2, J. 6 ०त० B. 7 वित्तं G1, G2, J. 8 प्रा० B. 9 वायुक्त० G2, J, K. 10 वाक् मा० B. 11 ०न्ति B. 12 ०कः स्तो० J, K. 13 ०वयिष्य० C, G1, G2, J, K. 14 ०त्र्यं B, G1, G2, J. 15 ०त्री G1, G2. 16 तथा० G1, G2. 17 C omits it. 18 अंत्या G1, G2, J, K. 19 ०न्यस्तनः C; ०न्यमानः G1, G2, J; ०न्यन्माना K. 20 भूयाद्दश० C; भूमान्दश० G1, G2, K; भूमान्द्दश० J. 21 ०बद्धो G1, G2, J, K. 22 यथा C. 23 Wanting in C. 24 ०त्र G1, G2, J. 25 ०नोऽप्याप्तवाम C, J, K; ०नोऽप्याप्त G1, G2. 26 G1, G2 omit न संयुक्ते. 27 तत्र C, G1, G2, J, K.

स्थानं गायत्रीणां यदि[1] परस्याह्नो गुर्वेवेदꣳ स्तोत्रं तत्र लघिष्ठं छन्दो[2]ऽचिकीर्षीत् ।

अ[3]थाप्येवं[4]माद्यवसानसमाधिः ।
प्रतिष्ठार्थो वाव गायत्रीः करोतीति[5] ।
5 तासु विवदन्ते—ऐन्द्र्यः[6] प्रा[7]जापत्यः सार्पराज्ञ्य[8]श्चान्द्रमस्यः सौर्य[9] इति शाकपूर्णिः ।

तथा धानञ्जय्यः ।
प्रत्यय आदित्यः, प्रत्ययो मनः ।
प्रत्यये प्रत्ययम् ।
10 त[10]त्रं गायत्रं करोति ।
स्थानं गायत्रस्य यदि परस्याह्नो गुर्वेवेदꣳ स्तोत्रं तत्र लघिष्ठं सा[11]माचिकीर्षीत् ।

अथाप्येवमाद्यवसानस[12]माधिः ।
प्रतिष्ठार्थो वाव गायत्रं करोतीति ।
15 "यज्ञायज्ञीयगौरीवितिरथन्तरवामदेव्यान्येवंयुक्तानि सामव्यूह इत्याचक्षते ।" Ārṣ. K. V. 31a; 131b.

"अथैतस्मिन् ब्रह्मोद्ये वदति ।
भूयाꣳसीव ह स्म शाण्डिल्यः [13]प्रतिदिशति ।
य[14]द्बादोऽश्वत्रिरात्रे ब्रह्मोद्यं तद्धा प्रत्ययिष्यद्यथा वैतद् ब्राह्मणा अधिमन्त्रꣳ समुदाहर[15]न्तीति ।" cp. LŚ. 3. 8. 7-9.
20
वर[16]वरणमत्र भवत्यन्तनिर्वचना आशिष इति । cp. LŚ. 3. 8. 10.
वृत्वा[17] वरानौदुम्बरीꣳ समभिपद्यन्ते, सर्व[18]कृतिं कृत्वा निस्वरिता इव मन्यन्ते । cp. LŚ. 3. 8. 11.

अत आत्मानमूर्जा प्रत्याप्याययन्तो मन्यन्ते[19] ऊ[20]र्गुदुम्बर इति ।
25 "स[21]मास्ते छन्दोव्यूहे सामव्यूहं कुर्[22]वत इति गौतमः ।
अकृतकारा[23]र्थः" त्रयस्त्रिꣳशमग्निष्टोमसाम करोति । Ārs. K. V. 23 b.

---

1 यत् B. 2 सामचि० K. 3 यथा० G1, G2, J. 4 ०वसान० G1. 5 ०रोति B. 6 ०न्द्रः B. 7 प्राजापत्याः C, K; प्रजापत्यः G1, G2; प्रजापत्याः J. 8 ०ज्ञ० C, G1, G2; ०ज्ञः श्चा० J, K. 9 ०पूर्णाः G1; ०पूर्णि० G2. 10 त्र गाय is wanting in G1, G2, J. 11 ०म० G1, G2. 12 ०माधि C; ०धिति G1, G2, J. 13 प्रदि० C, J, K; प्रविश० G1, G2. 14 यद्वादे० G1, G2. 15 ०न्त इति B; ०रति G1, G2, J, K. 16 वरण० C; चरन्चरण० G1, G2, J. 17 प्र B; वृत्या G1, G2, J. 18 ०कृतं B. 19 B adds इव. 20 वागु० B. 21 विस० B; समाद्रौ G1; समादौ J, K. 22 कुर्वत K. 23 ०र्थे G1, G2. J.

उ[1]पवदितान्[2] छन्दोमा[3]नवसानेऽचिकीर्षीत् ।
अथापि शिथिलोक्ताः ।
प्रतिष्ठोक्तश्च त्रयस्त्रिꣳशः, तमवसानेऽचिकीर्षीत् ।
अथापि त्रयस्त्रिꣳशे क्रियमाणे त्रिके सार्पर[4]ाज्ञे त्रिꣳश[5]तःस्तोत्रीयं दशम-
5 महः सम्पद्यते सा विराट् ।
अथाप्येवं द्वादशपञ्चविꣳशानहः सम्पद्यते ।
[6]नोहैनमृक्स्थाद्वरादकारिषꣳ सम्पदा चिदेनमुपाप्स्यामीति ।
एतद्वयꣳ शाण्डिलम् ॥ ९ ॥

पञ्चदशस्तोत्राज्ज्योतिष्टोमात् सषोडशिकाꣳ ससꣳन्धिकाꣳ[7] रात्रिं ब्रूहीति ।
10 चतुर्विꣳशतिमाज्येभ्य आदत्ते ।
द्वे वामदेव्यात्, चतस्रः सार्कमश्वात्[8], दश गायत्रास्तृचाः, तान् रात्रेः
स्थाने निदध्यात् ।
चतस्रः ककुभः सौभरात्, तासां द्वितीयातृतीययोश्चतुर[9]क्षरं चतुरक्षर-
मुद्धृत्य[10] द्वे प्रथमायामु[11]पदध्यात् ।
15 एवꣳ स विरा[12]ट्प्रथमो गायत्र्युत्तरो वैतह[13]व्यस्तोत्रीयः ।
अतिशिष्टानीतरस्यां ककुभ्युपदध्यात्, ताꣳ षोडशिनः स्थाने निदध्यात् ।
चतस्रो नार्मेधात्, तिस्रश्चोष्णिहः, एकां चानुष्टुभम्, ताꣳ षोडशिनः
स्थाने निदध्यात् ।
[14]अतिशिष्टास्तिस्रः, कौत्सस्य द्वे[15] [बृह[16]त्यौ] नौधसात्, तथा कालेयात्,
20 तासामेकाꣳ[17] षोडशिनः स्थाने निदध्यात् ।
ता[18]ः सर्वाश्चतुस्त्रिꣳशदक्षराः सम्पद्यन्ते ।
[19]अतिशिष्टास्तिस्रः सन्धेः स्थाने निदध्यात् ।
द्वे[20] ककु[21]भौ रथन्तरा[22]त्, चतस्रो यज्ञायज्ञीया[23]त्, तासां द्वे द्वे सन्धिस्तो-
त्रीयेषूपदध्यात् ।

---

1 अप० B. 2 ०ता C, G1, G2, J, K. 3 ०नां नाव० C, G1, G2, J, K. 4 ०राज्ञे B, सर्पे राज्ञे G1, G2, J. 5 त्रिशतस्तो० B, K. 6 नाहीनꣳ साक्षादकार्षꣳ C, G1, G2, J, K. 7 सन्धिकाꣳ B; ससꣳससं धिकꣳससंधिकꣳ G1, G2; ससꣳ-धिकाꣳ ससधिकाꣳ J. 8 सामकम० G1, G2, J. 9 द्वितीयायास्तृतीयायाश्च० C; ०तृती-यायाश्च० G1, G2, J. 10 ०क्षं तुरुक्षरमु० G1, G2, J. 11 ०या उ० K. 12 वितारा प्र० G1, G2, J, K but K has its त struck off. 13 ह is wanting in B; वैतहव्यः स्तो० K. 14 इति० G1, G2, J. 15 हे G1, G2. 16 Wanting in B. 17 ०का षो० C; ०कꣳषो० G1, G2, J. 18 G1 repeats here lines 17–20. 19 C, G1, G2, J, K add अन्तस्थान् and read प्रति०. 20 G1, G2, J add वसषोडशिक (०का G2, J)ꣳससंधिक ꣳरात्रिं निर्मिमीते. 21 ०भ G1, G2, J. 22 ०राः C. 23 ०याः C, G1, G2, J, K.

एवमेताꣳ सषोडशिकाꣳ ससन्धिकाꣳ रात्रिं[1] निर्मिमीते ॥ १० ॥

ततः पृष्ठ्यं[2] ब्रूहीति ।

सवनेभ्यः पूर्वस्त्र्यहः षोडशिनश्चतुर्थꣳ रात्रेः पञ्चमꣳ सन्धेः षष्ठं
पृष्ठ्यां[3]च्छन्दोमान्[4] ब्रूहीति ।

5 त्रिवृत्पञ्चदशयोः समासश्चतुर्विꣳशस्तत् सप्तमम्, सप्तदशत्रिणवयोश्चै[5]-
तुश्चत्वारिꣳशस्तदष्टमम्, एकविꣳशत्रयस्त्रिꣳशाभ्यां नवमं[6]दशमे,
सोऽष्टाचत्वारिꣳशं नवमे निधाय पञ्चदशषट्कानादत्ते ।

सर्वꣳ षोडशिनम्, ते सप्तत्रिꣳशत्तृचाः, तेषां चतुर्विꣳशतिमादाय[7] दश-
मस्याह्नोऽष्टावष्टौ पवमान[8]स्थानेषु निदध्यात् ।

10 चतुराज्येषु तया पृष्ठे[9]ष्वेकम्, अग्निष्टोमसाम्नः स्थाने तथा सार्पराज्ञे ।

त्रयस्तृचा अतिशिष्यन्ते ।

तान् प्रथमस्याह्न उक्थस्तोत्रीयान् ब्रुवीत ।

एवं तदुक्थ्यादुक्थ्यमभिसंक्रामति ।

त्रिवृतं[10] पञ्चदशम् ।

15 एतां[11] माहावृक्षी[12] सम्पदि[13]त्याचक्षत आचार्याः ।

दशरात्रो महावृक्षस्तस्य ह्यग्रं[14] गत्वा स्वर्गमेनम्[15]उपपद्यत इति ।

नैषां[16] सर्वस्मिन् दशरात्र उपपद्यत इत्यौपमन्यवः[17] ।

त्रयस्तृचा[18] अतिशिष्यन्ते ।

तान्[19]अग्निष्टोमसꣳस्थं[20] उक्थ्यस्तोत्रीयान्[21] ब्रुवीत ।

20 अपरान्[22]उपच्छन्दोमेष्वेव ।

एषा सम्पत् सिध्यतीति[23] ।

तदप्येवमिवं[24] ब्राह्मणं भवति—"हत ऐन्द्रोत इति होवाचाऽभिप्रतारी[25]
काक्षसेनिः[26], ये महावृक्षस्याग्रं गच्छन्ति क ते ततो भवन्ति ।" इति

1 सन्नि G1; सत्रि G2; सत्रिं J. 2 ०ष्ठं C, G1, G2, J, K. 3 ०ष्ठ्याश्छ० C, J; षष्ठ्याः छ० G1, G2. 4 ०मानं C, G1. G2, J, K. 5 ०योश्चत्वारिꣳशस्तद्दशमेम् G1, G2, J; ०तद्दशमे K. 6 ०मं द० B, K; ०मे द० G1, G2. 7 ०माहादा० G1, G2, J, K. 8 ०ने स्था० G1, G2. 9 वृष्टिष्वे० G1, G2, J, K. 10 ०तः C, J; ०त G1, G2. 11 एतीता G1, G2, J, K. 12 म० C, G1, G2, J, K. 13 पदी० G1, G2, J, K. 14 ह्याग्रं G1, G2, J. 15 ०र्गगम० C; स्वगम० G1, G2, J, K. 18 16 तेषा G1, G2, J; तेषां K. 17 ०पगनावाः G1, G2, J; ०पगमनावाः K. 18 ०च G1, G2. 19 तान् योऽग्नि० C, J, K; तान्यमिष्टो० G1; तान्यग्निष्टो G2. 20 ०स्यास्तो० G1, G2, J, K. 21 ०यानि B; ०त्रीन् G1, G2, J. 22 अपररूपं तच्छ० C; अपरूपं तच्छ० G1, G2, J, K. 23 ०ध्यवती० G1, G2, J. 24 ०मेव C, G1, G2, J. 25 ०रिणं B. 26 ०सेनिम् B.

षडहं महावृक्षमवोचत्[1]। PB. 14. 1. 12.
तस्य ह्यग्रं गत्वा त्रिवृत्पञ्चदशयोः पत्तयोः क्रियां दर्शयति।
तदप्येवमिव ब्राह्मणं भवति—"त्रिवृत्पञ्चदशावेव स्तोमौ पत्तौ कृत्वा स्वर्गं लोकं प्रयन्ति[2]।" इति। PB. 14. 1. 13.
5 तयोः समासश्चतुर्विंशः।
तस्याष्टाचत्वारिंशो द्वादशातिशिष्यन्ते[4]।
तथा—दशमात् स चतुर्विंशो य एताः[5] सम्पदो[6] विदुः।
ते पक्षिणः ये न[8] विदुस्तेऽपत्ताः।
तदप्येवमिव[9] ब्राह्मणं भवति—"ये वै विद्वांसस्ते पक्षिणो येऽविद्वांसस्तेऽपक्षाः" इति [10]तेऽपक्षा इति ॥ ११ ॥ ibid.
10

[11]द्वितीयः पटलः

अथातो गवामयनम्।
तदेक एकेनाह्नाभिविदधति[13]।
"सर्व[14] ज्योतिष्टोमेनैके[15]।" LŚ. 4. 5. 2.
15 "अतिरात्रश्चतुर्विंशनवाहव्रतातिरात्रः" इति कृत्वा ज्योतिष्टोमेनैव संस्तुणन्ति। LŚ. 4. 5. 3.
[18]अत्रैवैके गोआयुषी दशरात्रमित्युपाहरन्ति।
एतं संवत्सरप्रवर्हं इत्याचक्षते। cp. LŚ. 4. 5. 4.
शङ्खाहृतमिति च। cp. LŚ. 4. 5. 5.
20 एतच्छातशूर्पो वार्षगण्य आसाञ्चक्रे।
नानाऽहोभिर्वयं कल्पयामः। cp. LŚ. 4. 5. 6.
यथैतद् ब्राह्मणम्—"अथ खलु य ऊर्ध्वं ज्योतिष्टोमदशाहाभ्याम्" यज्ञक्रतवः सप्तभिः पर्यायैस्तेषु[22] ज्योतिष्टोमानाञ्च दाशरात्रिकाणाञ्च[23] द्रव्याणामागमो भवति।" Ārṣ. K. V. 34a.

---

1 ०यो० G1, G2, J, K. 2 ०यच्छन्ति G1, G2, J, K. 3 ०शीति० G2. 4 C, G1, G2, J, K add ऽष्टमात्. 5 एते C, G1, G2, J, K. 6 ०दौ C, G1, G2, J, K. 7 दक्षि० G1, G2, J, K. 8 B adds मात्. 9 ०प्येव G1, G2, J, K. 10 C does not repeat ते…इति; K does not repeat ते. 11 In B only. 12 एतेना० J. 13 ०धते C, G1, G2, J, K. 14 Wanting in C, G1, G2, J, K. 15 ०मेनाथैके C, J, K; ०मोनाके G1, G2. 16 ०त्रि० G1, J. 17 ०शे नवाहं व्र० B, J; ०शतेनवाहं व्र० G1, G2; ०शे नवाह० K. 18 ०त्रैके C. 19 रात्र is wanting in J. 20 ०पहर० B; ०पर० G1, G2; ०पार० J. 21 एतस्था सशूर्पो वार्कखण्ड आ० C; एतस्थात शूर्पो वार्कखण्ड आ० G1, G2, J, K. 22 ०स्तेषां B. 23 ०करणं च J.

"स्तोमान्वितानि स्थानान्वितानि पृष्ठान्वितानि तन्त्रान्वितानि भागान्वितानि सꣳस्थान्वितानि आशीःसप्रायाणीति[1] रूपाच्छान्दसान्यायन्त्यपि[2] च व्यावृत्त्यर्थानि[3]।" Arṣ. K. V. 137a.

तत्रेह चतुर्विꣳशे यानि सप्तमात्[4] स्तोमान्वितानि तानि[5]।

5 यानि [ द्वितीयात्[6] ] स्थानान्वितानि तानि।

यानि ज्योतिष्टोमात् पृष्ठान्वितानि तानि।

[ यानि[7] ] दशरात्रात् "सर्वाणि रूपाणि क्रियन्ते" इति तानि।

PB. 4. 2. 14.

यानि छान्दसान्यभिभवन्ति प्रवन्ति स्वस्त्ययनप्रवादान्युपक्रमेऽभिरूपाणीति तानि।

10

तत् खलु बृहत्पृष्ठमपि रथन्तरं[8] माध्यन्दिनं[9] कुर्म उपक्रमणीयमहरिति।

रथन्तरं द्वितीयं[10] बृहद्ये[11] के चोभयसामान[12] इति ह स्माह शाण्डिल्यायनः।

बृहत्पृष्ठास्ते रथन्तरमाध्यन्दिना आशयेनैव[13]।

अपिच[14] स्वे सवने स्वे छन्दस्युभे वामदेव्योत्तरे भवत इति।

15 चतुर्ऋचं होतुराज्यꣳ समामनामः।

तासां चतुर्थीमुद्धरति।

उद्धर्ती[15] भवति।

अपरूपा प्रायणार्थे।

अथार्प्य[16]स्याꣳ रणं[17]प्रवादो भवति।

20 अपरूपा स्वस्त्ययनार्थे।

अथ यत्रैतत् सर्वस्वारे भवत्येतां[18] तत्र करोति।

अथ खलु प्लवमन्वहं ब्राह्मणं सन्तन्नान्वहं[19] कुर्मः।

एवं च रहस्यब्राह्मणं[20] दर्शयति।

अपि शश्वद्ब्राह्मणमधीयते।

25 ते वा एते प्लवातिप्लुता[21] ये प्लवमन्वहमुपयन्तीति ॥ १२ ॥

उद्धरन्त्याचार्याः—त्रैककुभꣳ समानोदर्कयोनि।

अपरूपं प्रायणार्थे।

---

1 ०याणि B. 2. रूपाणिच्छा० B. 3 ०व्या० B. 4 ०मा G1, G2, J, K. 5 Wanting in B. 6 Wanting in B; ०या G1, G2, J, K. 7 Wanting in B. 8 ०तरमध्य G1, G2, J. 9 म० C, G1, G2, J, K. 10 ०यमिति C, G1, G2, J, K. 11 ०हदेके G1, G2. 12 चो is wanting in G1, G2, J. 13 कुशलेनैवम् C, G1, G2, J, K. 14 Wanting in C, G1, G2, J, K. 15 उद्धरत्युती G1, G2, J. 16 ०प्येतस्याꣳ C, G1, G2, J, K. 17 ०स्यारंमेण प्र० B. 18 ०त्येकां B. 19 ०न्तमन्व० B. 20 ०णे C, G1, G2, J, K. 21 ०तिप्लवा C.

तत्रैतत् सौभरं पृष्ठान्वितम्।
विकल्पो वा स्याद्[1] ब्राह्मणचोदितत्वात्।
"अथो[2] खल्वाहु[3]—'सर्वाणि रूपाणि क्रियन्ते' इति। PB. 4. 2. 14.
तत्रा[4]चार्या एतेष्वेवं[5] द्रव्येषु[6] सर्वान् स्तोमान् सर्वाणि[7] पृष्ठानि सर्वा[8]
5 विभक्तीश्चं[9] दशरात्र[10]रूपाणीति भक्तिमात्रेणैव[11][12] कल्पयन्ते।
त्रिवृत्पञ्चदशौ चतुर्विंशः[13] सम्पद्यते[14]।" Sāy. ibid.
पञ्चदशसप्तदशान् पञ्चैकविंशान् षडेव त्रिणवान् षट् त्रयस्त्रिंशान्
सर्वाणि पृष्ठानि बृहद्रथन्तराभ्यामुपाप्तानि।
एतत्परोक्षाणि[15] ह्रीतरा[16]णि, वामदेव्येन वैतस्माद्विसृष्टानि, उद्वंशीयेन वा।
10 एतद्धि सर्वेषां रूपमिति।
अनिरुक्तो[17] वि[18]भक्तयः।
निरुक्तं[19] सर्वाभि[20]प्रायम्, वामदेव्येन स्वरवि[21]भक्तिः।
पृथक् दां[22]शरात्रिकेभ्यो द्रव्यागमं सम्पश्येत्।
उपवती[23] प्रथमात्, अग्नियवती द्वितीयात्, दविद्युत[24]वती तृतीयात्,
15 सत्रासाहीयं सस्तोत्रीयं चतुर्थात्।
अथ खलु साकमश्वमुकथप्रणयेऽकरिष्यत्।
अतिरात्रे तत्कृतं भवति।
तन्न समविचारयिषीत्।
तत्रैतत् सत्रासाहीयं त्र्यहोपक्रमादुपक्रमे[25]त्।
20 बार्हता[26]द् बार्हते।
सोढवतीषु सोढवन्ना[27]मः।
अथेदं कर्म सहेमहीति पार्थं पञ्चमा[28]त्।
उद्वंशीयं षष्ठात्।
"यद्वा उद्वंशीयं तदुद्वंशपुत्रः।" इति हिं[29] भवतीति। PB. 13.
25 12. 10.
उद्वंशीयेनैव सर्व[30]रूपावाप्तिमेके।

---

1 ०स्माद् C. 2 अथो S. 3 ०हुः S. 4 तत्र is wanting in S; C, G1, G2, J, K add खलु after तत्र. 5 ०र्यः G1, G2. J, K. 6 ०प्येव G1, G2, J. 7 Wanting in C. 8 सर्वापि G1, G2, J. 9 सर्वाणि G1, G2, J, K. 10 ०क्तीदर्श० C; ०क्तीदशदश० G1, G2, J; ०क्तीनि K. 11 ०त्रि० G1, G2. 12 विभ० S. 13 ०शं स० C, G1, G2, J, K. 14 सम्पा० S. 15 ०क्षणी G1, G2, J. 16 हि० G1, G2, J. 17 ०क्ताया C. 18 Wanting in C. 19 C adds विभक्तं. 20 ०णिप्रायं G1, G2, J, K. 21 ०रभ० B. 22 द्वाद० B. 23 ०वीती J. 24 ०द्युती B; ०द्युतती K. 25 ०मे B, G1, G2, J, K. 26 बार्हतमिताद् B. 27 ०न्नमः G1, G2. 28 ०त्रम B. 29 हे G1, G2, J. 30 सर्वारू० G1, G2, J.

बहु सप्तमात् ।
"इन्द्रो अग्ना नमो बृहत्" SV. 2. 150; RV. 8. 12. 15; PB. 11. 7. 3; 14. 8. 2.

इत्यष्टमात् ।
समन्तदैर्घश्रवसे नवमात् ।
5 अभीवर्तः सस्तोत्रीयो दशमात् ॥ १३ ॥

---

# अथ पञ्चमः प्रपाठकः[1]

अथैषोऽभिप्लवः[2] ।

तस्मिन् सारण्ये गेयं[3] छन्दः क्लृप्तं बभूवेति शाण्डिल्यः ।

अर्द्धमेव प्राग् विषुवतोऽर्द्धमूर्ध्वं॰ सादित्यव्रतानि शुक्रियाणि विषुवतीति[4],
"सतवःश्यावीयानि सामानि व्रत इति" समूहति । Ārṣ. K.V. 50 a.

5 बार्हद्रथन्तरपृष्ठ्यादनित्याभिरनित्योऽयं षडह[5] इति ।

अषाडहिकीरनित्या इत्याचक्षते ।

[ ते[6] ] खलु शश्वद्भाल्लविनः स्तोत्रियात् प्रतिपदः कुर्वन्ति, यथास्थानमेवानुरूपान् ।

अनुरूपान्[7] वयं प्रतिपदः[8] कुर्मः, स्तोत्रीयानुरूपान् ।

10 एवं यथोत्तर॰[9] स्तोत्रीयानुरूपाणां प्रत्याहारो भविष्यतीति[10] ।

षडहवशेन नाना[11]प्रतिपदः समानं पर्यासम्[12], एकाहवशेन तेन प्रच्युतं द्वितीयपर्यासं प्रथमेऽहन्यनुगृह्णाति ।

अथैतान्येव[13] वैयूहिकान्याज्यान्युद्धृत्य[14] गायत्राणि तद्विभक्तीनि प्रतिनिदधाति ।

15 त्रीणि त्रिणिधनानि[15] करोति ।

त्रीणि[16] ह्येव षडहेऽवधारितत्रिणिधनानि भवन्ति ।

तानि यत्र यथाकृतमभ्यस्यति[17] ।

आयास्यं प्रायश्चित्तिसाम षष्ठेऽहनि चिकीर्षन् पार्थं द्वितीयस्य माध्यन्दिनं[18] करोति ।

---

1 In C only. 2 ०वाः G1, G2, J, K. 3 गेहे G1, G2; गेहं J, K. 4 ०वती B; ०वति C, K. 5 ०षडह इति is wanting in B. 6 Wanting in B. 7 Wanting in G1, G2, K. 8 ०पदुपकुर्मः B. 9 यथान्तर॰ B. 10 भवतीति C, J. 11 नाना wanting in G1, G2. 12 ०र्यांहम् G1, G2, J. 13 ०तानेव G1, G2, J. 14 ०थिका० C, G1, G2, J, K. 15 त्रीणि अयनानि B; निधनानि K. 16 C repeats त्रीणि. 17 ०स्यन्म् G1, G2, J. 18 ०न्दिनाख्यं C, K; ०न्दिनांहं G1, G2; ०न्दिनांघ्यं J.

"एतत् पुरस्तात् स्तोभं क्षत्रसाम बृहति पृष्ठेऽभिरूपम्"[1], तेन प्रत्युत-मिद्दवद्वासिष्ठं षष्ठेऽहन्यनुगृह्णाति स्वरविभक्तेरनुग्रहाय ॥ १ ॥ Ārṣ. K. V. 37 b.

अथैते त्वाष्ट्रीसाम चान्धीगवं च तृतीयचतुर्थयोरह्नोर्व्यतिहरति त्र्यहयो-र्व्यतिषङ्गाय ।

5

[तत्र][4] ता एव देवताविभक्तयः ।

अथ सामान्तविभक्तयः ।

एतेषामेव द्रव्याणां तल्लिङ्गाः कल्पयेत ।

पञ्चमे तु निधनविभक्तिर्न विद्यते ।

10 षष्ठे चेडाविभक्तिः ।

तत्राभ्यावारयन्ति—

बार्हद्गिरं वानुकल्पयेत्, सौश्रवसं वा ।

उक्थानां ब्रह्मसाम कुर्यात् ।

गोष्ठं षष्ठे नु कल्पयेदिति ।

15 तस्य त्रिकद्रुकाः स्तोमाः, षाडहिकानि तन्त्राणि ।

अस्ति हि षडहप्रवादः ।

अपि चैवं रहस्यब्राह्मणे दर्शयति—ज्योतिष्प्रायणो ज्योतिरुदयनः षड-होऽभिप्लव इति चैतरेयिणाम् ।

तांस्तु[11] यदेवं प्रयुङ्क्ते, एवं ज्योतिष्प्रायणो ज्योतिरुदयनः षडहो भवति, यथास्थानमितराविति[12] ।

20

तत्र यान्यैकाहिकानि द्रव्याणि स्तोमानि[13] तानि ।

[ यानि षाडहिकानि तन्त्रान्वितानि तानि[14] । ][15]

यानि छान्दोमिकानि[16] त्रयान्तानि ।

त्रयस्ते[17] त्रय इमे लोकसम्मास्ते[18] लोकसम्मा इमे बृहद्रथन्तरपृष्ठास्ते बृहद्रथन्तरपृष्ठा इमे[20] इति ।

25

रूपा[21]च्छान्दसान्या[22]यन्त्यपि च व्यावृत्त्यर्थानि[23] ।

1 षष्ठे० B; षष्ठभिरूप G1, G2; षष्ठिभि० J. 2 प्रत्युत० G1, G2, J, K. 3 ०मिव० G1, G2, J. 4 ०र्ये च० J. 5 Wanting in B. 6 एष तेषा० G1, G2, J, K. 7 पृष्ठे B. 8 च C, G1, G2, J, K. 9 इरस्य० G1, G2, J. 10 G1, G2, J omit ऽभिप्लव … षडहो (line 19). 11 तांस्तुमदे० C; K adds न. 12 ०मितरदिति C; ०मिराविति G1, G2, J. 13 ०मान्वितानि C, G1, G2, J. 14 Wanting in G1, G2. 15 Wanting in B. 16 छन्दो० C, G1, G2, J, K. 17 य० B. 18 Wanting in G1. 19 ०सम्मास्त C, G1, G2, J. 20 इमा C. 21 K repeats रूपा. 22 ०छान्दसान्या० C; ०छन्द० G1, G2, J, K. 23 G1, G2, J, K add च.

स्वा[1]दिष्ठां प्रथमस्याह्न आ[2]र्भवीयां करोति ।
या ह्येतस्या[3]र्भवीया भवति न तस्या उत्तरेऽधीमहे ।
तस्याः शश्वन्माषशरावय उत्तरेऽधीयते ।
तां[4] ते कुर्वन्ति, आभीशवं चतुर्थे ।
5 नावमिकं कुर्यादिति धानञ्जय्यः ।
व्यावृत्तये पृष्ठ्याभिप्लवयोश्चातुर्थिकमेवेति गौतमः ।
एषै[5]तस्याह्नः स्वरविभक्तिर्भवतीति भव[6]तीति ॥ २ ॥

तृ[7]तीयः पटलः

" 'अभीवर्त्तो ब्रह्मसाम' इति । PB. 4. 3. 1; 18. 6. 14.
10 तस्य स्तोत्रीयविधिः—'यदि[8]तः समानꣳ साम भवत्यन्योन्यः प्रगाथः' इत्यत्यन्तनानात्वम् । PB. 4. 3. 8.
'य आस्तुतं कुर्वते यथा दुग्धामुपसीदेदेवं तत्' इति प्रयुक्तप्रतिषेधः । PB. 4. 3. 11.

तस्यान्ववायः—
15 'पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते' इति ।" PB. 4. 4. 1; LŚ. 10. 6. 1; Kalp. 1. 7.
अथातः प्रगाथायना[10]नि—
"चतुःशतमैन्द्राः बार्हताः प्रगाथाः, द[11]शतयीषु" तान् समा[12]मनामः । LŚ. 10. 6. 3. Kalp. 1. 7;
20 " 'तेषां चत्वारोऽन्यत्रस्था[13]नां बृहद्रथन्तरकालेयस्तोत्रीया अहरहः शस्य[14]न्ते ।' cp. LŚ. 10. 6. 4.
इन्द्रक्रतुरौत्तरपक्षिकः ।
शतमतिशि[15]ष्यते ।
'तेषामेकं चतुर्विꣳशे कुर्यात् ।' LŚ. 10. 6. 5
25 नूनं[16]ꣳ शत[17]मतिशिष्यते ।
सप्ताशीतिः सतोबृहत्यः ।
ते 'ए[18]कोनत्रिꣳशत् सां[19]तोबार्हतास्तृचाः ।' LŚ. 10. 6. 6.

---

1 स्वनिष्ठां J. 2 अर्भवीयं G1, G2, J. 3 ०स्याह्न आर्भ० C, G2, J, K; ०तस्माह्न अर्भ० G1. 4 नान्ते कु० G1, G2, J, K. 5 एवैत० C. 6 Wanting in G1, G2, J. 7 In B only. 8 ०दितिः J. 9 Omitted by C. 10 ०यतानि C. 11 दा० B. 12 समामनेत् C; समामेन G1, J; समामने G2, K. 13 ०स्थानाद् B. 14 शतस्य G1, G2, J; स्य K. 15 ०न्ते J, K. 16 न्यूनꣳ B, K. 17 समति० B; शतमिति० G1, G2, J. 18 एकेन न त्रि० C, G1, G2, J. 19 श्लोकोबा० B.

तेषामिहैकविंशतिमाहरति ।
तद्धिंशतिशतं सम्पद्यते ।[1]
'विंशतिशतं पञ्चानां मासानामाभिप्लविकान्यहानि भवन्ति ।' cp. LŚ. 10. 6. 8.

5 तेष्वेतान् प्रगाथान् प्रयुञ्जीत ।
'तृतीये[3] तृतीयेऽहनि सतोबृहतीः कुर्वन् य एष पञ्चमस्य मासस्योत्तमोऽभिप्लवस्तस्मिन् द्वे[4] सतोबृहती कुर्यात् ।' " cp. LŚ. 10. 6. 7, 8. Kalp. 1. 7.

तृतीयपञ्चमयोरह्नोर्न हि प्रगाथा अनुभवन्तीति ।
10 ततं[5] ऊर्ध्वं छन्दसी संयुज्यात् ।
"औष्णिहे तृच एकां गायत्रीमुपदध्यात् ।" cp. LŚ. 10. 6. 9.
सतोबृहत्यतिशेषं समाप्येत्येव[6] गौतमः ।
"अष्टौ सातोबार्हतास्तृचा अतिशिंष्यन्ते, तान् प्रथमे चाभिप्लवे कृत्वा द्वितीयस्य चं[8] ड्यहे तत ऊर्ध्वं छन्दसी[9] संयुज्यादिति ।" cp. LŚ. 10. 6. 10

15
" 'चतुरुत्तरैरेव छन्दोभिरेतव्यम्' इति । PB. 4. 4. 5; LŚ. 10. 6. 12.
'गायत्र्यां चतुर्विंशेऽभीवर्त्तं कुर्यात् ।
उष्णिहि प्रथम आभिप्लविके, अनुष्टुभि द्वितीये ।' cp. LŚ. 10. 6. 12.
तत ऊर्ध्वं बृहत्या पञ्च मास इत्वा य एष पञ्चमस्य मासस्योत्तमोऽ-
20 भिप्लवस्तस्य 'पञ्चमेऽहनि पङ्क्तीः कुर्यात्, अपि वा षष्ठे, तत ऊर्ध्वं त्रिष्टुभ्युत्तमे स्वरसाम्नि जगत्यामिति ।' cp. LŚ. 10. 6. 13, 14, 16.
अत्रापि सतोबृहत्यतिशेषं समाप्येत्येवं[11] गौतमः ।
'नव सातोबार्हतास्तृचा अतिशिष्यन्ते, द्वौ च प्रगाथौ' तान् प्रथमे चाभिप्लवे[12] कृत्वा द्वितीयस्य पञ्चाहे[13] पङ्क्तीः" षष्ठे वा[14], तत ऊर्ध्वं
25 त्रिष्टुभ्युत्तमे स्वरसाम्नि जगत्यामिति ॥ ३ ॥ cp. LŚ. 10. 6. 17; Kalp. 1. 7.

---

**1** ०शतंस० G1. **2** ०प्ला० B. **3** Wanting in B, C. **4** द्वयोः B; द्वयी G1, G2, J; द्वयीः K. **5** Wanting in G1, G2. **6** ०माप्येति C; समायाति G1. G2, J; समायोति K. **7** ०ते G1, G2, J. **8** Wanting in C. **9** ०सि B **10** सातो० C, G1, G2, J. **11** ०वं G1, G2, J. **12** ०वा G1, G2, J, K. **13** पञ्चमे K. **14** Wanting in C, G1, G2, J, K.

"छन्दःसंयोग[1]रूपोऽध्यविधि[2]स्तत्स्थाने चातुरुत्तर्यम् ।
मासशब्दवैयर्थ्यमिति चेत् 'पञ्च[3]सु मासु[4]' इति यथा पृष्ठ[5]थायनोऽपवादस्त[6]-
लिङ्गेन · दद्राण[7]वतीवन्न च मासान्तर[8] एतत् कर्मास्तीति । PB. 4. 4. 1.

5 एकदेशे यथा [9]कालकृतौ लोके कृतमिति ।
'बृहत्या चैव त्रिष्टुभा चैतव्यम् इति ।'" PB. 4. 4. 8; Kalp. 1. 8.
"त्रिष्टुभि चतुर्विंशेऽभीवर्त्तं[10] कुर्यात् ।
बृहत्यां प्रथम आभिप्लविके[11] त्रिष्टुभि द्वितीये ।
एवमनुपूर्वं छन्दसोः[12] प्रयोगो भवतीति ।
10 तत[13] ऊर्ध्वं व्यत्यस्येद् ।" Say. PB. 4. 4. 10.
बृहतीतृच एव तन्मन्य इति शौचिवृक्षिः ।
बृहत्या पञ्च मास इत्वा य एते "अष्टौ सातोबार्हतास्तृचाः" अतिशिष्यन्ते,
ये चैते त्रयोऽन्यत्रस्थाना[14] बृहद्रथन्तरकालेय[15]स्तोत्रीयास्तैः षष्ठे मासि त्रिष्टुभो[16] व्यत्यस्येत् । Kalp. 1. 7.
15 यदहः कालेयस्य[17] स्तोत्रीयेऽभीवर्त्तं कुर्यात् ।
'तरणिरित्सिषासति' इति । SV. 1. 238; 2. 217; RV. 7. 32. 20; PB. 12. 4. 4.

कालेय[18]मासञ्चारात् ।
यदहो[19] रथन्तरस्य बृहत्[20]स्तोत्रीये रथन्तरं स्यात् ।
20 अपि वा स्वरसाम्नोरन्यतरस्मिन् रथन्तरस्तोत्रीयं[21] कुर्यात् ।
अत्र ह्यन्यासु रथन्तरं भवतीति ।
अथ त्रयस्त्रिंशत् प्रगाथाः[22] ।
तेषामेकं चतुर्विंशे कुर्यात् ।
सातोबार्हतं त्रयस्त्रिंशायने[23]ऽभिप्रयुञ्जीत ।

---

**1** ०ग आपो० B; ०गं रू० G1, G2, K. **2** ०वियेत० B. **3** पञ्च B. **4** मासा इति B; मांस्स्त्वति G1, G2, J; मांस्त्विति K. **5** ०पृष्ठधेय० B, G1, G2, J. **6** ०स्तु लिङ्गेन C, J, K; स्तु लिङ्गे G1, G2. **7** दद्राणत्त B; रुद्राण० G1. **8** समान्तरये तत् क० C; मासान्तरये तत् क० G1, G2, J, K. **9** अकाल० B. **10** G1, G2, J omit अभीवर्त्तं ··· कुर्यात्. **11** C, K add ऽपि च ( वा K ) बृहत्यामेव चतुर्विंशे बृहत्यां प्रथम आभिप्लविके. **12** ०र्वछ० B, G1, G2, J. **13** G1, G2, J, K add ते. **14** ०नाद् B. **15** ०कालेये स्तो० G1, G2, J. **16** त्रैष्टुभो C. **17** ०यः G1, G2, J. **18** ०यं स० B; ०यमसं० K. **19** ०ह्ना G1, G2, J, K. **20** बृक्षस्तो० G1, G2, J. **21** ०या G1, G2, J but G2 corrects it. **22** ०थमेकं च० C, G1, G2, J, K. **23** ०शानयने B.

अपि वा न सतोबृहतीराद्रियेत, य एव चतुर्विंशे तमनुसंहरेदिति
॥ ४ ॥

एतेनैवोत्तराणि[1] [ द्रव्याणि[2] ] व्याख्यातानि ।
आ द्विप्रगाथाद्[3] यार्था[4]कामी पुरस्तात् प्रगाथानां[5] स्यात्, तथोपरिष्टादिन्द्र-
क्रतौ सामानि प्रकल्पयेत्[6] ।
5 तावन्ति तच्छन्दस्यानि[7] निधनवन्ति[8] ।
यदि तच्छन्दस्यानि न विद्येरन्नपि वैश्छन्दसानि[9] कुर्याद् यान्यभिरूपाणि
स्युर्गीतितश्च निधनतश्च[10] ।

कतम एषां कल्प इति ।
10 प्रथमौ प्रतिषिद्धौ[11]वित्याहुः ।
अथेतरे सर्वे[12] कल्पाः ।
अपि वा द्विप्रगाथमेव कल्पः स्याद् ।
दोषदर्शी नूनं पूर्वानि[13]त्यक्रमीदिति ।
ते कस्य हेतोः ।
15 षट्प्रगाथमयनं समारप्स्यन्तीति ।
नेदं षट्प्रगाथ[14]मिति शाण्डिल्यायनः ।
यः षट्प्रगाथं चिकीर्षेन्न सतोबृहतीराद्रियेत ।
ये[15] एवं[16] चतुर्विंशे तमनुसंहरेदिति ।
स खल्वयमभीवर्त्तः षट्प्रगाथान[17]धितिष्ठति ।
20 पूर्वस्मिन् पञ्चसि द्वयो[18]श्च सतो[19]बृहतीः ।
एवमेवेन्द्रक्रतू[20]त्तरे पञ्च प्रगाथिकानि, द्वे सातो[21]बार्हते, विकर्णमष्टमम् ।
एवमनयोः समाधिरिति ।
अथैतत् सुज्ञानमौष्णिहमाविषुवतः सर्वत्र पृष्ठ्यपञ्चाहवर्जम्[22], अतिरात्राश्च[23]
यथाकामकल्प्यत्वादेतेषामह्नामि[24]ति ।

25 एतदभिप्लवस्य राथन्तरेष्व[25]हस्सु विचार्यते ।

---

1 G1, G2, J add ओं. 2 Wanting in B. 3 G1 omits द्॰… प्रगाथानां. 4 यथाकारी C, G2, J, K. 5 ॰थान्त्स्यात् C, J, K. 6 प्रतिकल्प॰ C, G1, G2, J, K. 7 छन्द॰ G1, G2; न छन्द॰ J. 8 निधनवन्ति … ॰स्यानि wanting in G1, G2. 9 C, G1, G2, J, K omit वै. 10 ॰नंत॰ G1, G2, J, K. 11 ॰षिध्या॰ G1, G2. 12 सर्व G1, G2, J. 13 पूर्वान्यत्य॰ K. 14 ॰था॰ G1, G2, J. K. 15 B adds अपि वा. 16 एत G1, G2, J. 17 ॰भि॰ G1, G2. 18 ॰सिद्धेश्च C, G1, G2, J, K. 19 ततोबृहतीम् B. 20 ॰क्रतुरुत्तरे C, G1, G2, J, K. 21 सतो॰ C. 22 ॰वर्ज्यम् B; ॰वर्ज G1, G2. 23 ॰श्चायथा॰ C, G1, G2, J. 24 ॰ह्नां तदभि॰ C, G1, G2, J, K. 25 ॰रेष्वह॰ G1, G2, J.

सायस्कसाम तद् भवति ।
तत्रैतज्जरावोधीयमेतद् गायत्रीसामापन्नम् ।
अपि च रुद्रवयोनिवधार्थेऽभिरूपम् ।
उद्धरति वषट्कारनिधनम्, तस्य स्थाने सप्तहङ्करोति ।
5 एतद् बृहता समानयोनिवधार्थेऽभिरूपम् ।
उद्धरति बृहत्, तस्य स्थाने वषट्कारनिधनम् ।
एषा देवेषुर्भवति ।
तामाशीःस्थान ईप्सन् ॥ १ ॥

सर्वस्वारे सप्तर्चनवर्चान् करोति, एते प्राणोक्ता इति ।
10 तेषां विलोपेन प्राणविलोपो भविष्यतीति ।
स यत् प्रथमा१ँस्तृचान्, एते रूपसम्पन्ना इति ।
चतुर्ऋचमैन्द्राग्न१ँ समामनामः ।
प्रवत्यासां द्वितीया, तामुद्धरति, सर्वाः प्रवत्यो भविष्यन्तीति ।
गायत्रीणां पृष्ठापदानाद् बृहतीषु मैत्रावरुणसाम करोति त्रिस्थानां बृहतीं पृष्ठेषु चिकीर्षन् ।
15

तत्रैकं मैधातिथ१ँ स्वयोन्यापन्नम् ।
पुरस्तादेतत् स्थानम्, अभिवतीषु होत्रिकपृष्ठानि स्वयोनीनि चिकीर्षन् ।
परागं बृहतीष्वग्निष्टोमसाम, पैरागनुप्रहरतेति ।
तौ यदावर्त्तयति, एवं प्रवत्या प्रक्रम इति ।
20 तत्र यज्ञायज्ञीयमन्तसमाधये ।
तस्यादरस१ँसङ्गेन प्रस्तावयति प्रगाथीकाराय पूर्वस्यांश्चान्त्यं मेयाया-श्चाद्यम् ।

एषोऽक्षरस१ँसङ्गः ।
तद्यत्र यत्रैतेषां तृचापत्तिर्बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चैवमेतेषां प्रस्तावयति ।
25

1 ०यगायत्रीणाम० B. 2 रुद्रदेवत्योरिव० B. 3 ०निवधार्थे० C; ०निर्धाध्ववधार्थे० G1, G2, J; ०निर्धावधार्थे K. 4 C, G1, G2, J add here स्वारे सप्तर्चनवर्चां करोत्येते प्राणोक्ता इति ते. 5 ०शीर्ध्वनिर्दृप्सन् C; ०शीर्धाध्वनि ई० G1, J; ०शीध्र्वाध्वनि ई० G2; शीर्वाध्वनि ई० K. 6 G1, G2, J add स्वा. 7 तत्रैतन्मै० C, K; तत्रैतमै० G1, G2, J. 8 स्वयोन्युपन्नं C; स्वायान्यपन्नं G1, G2, J. 9 अनभिवतीष्वप्रवतीषु C; अनंभ( ०भि J ) वतीष्वप्रवतीषु G1, G2, J, K. 10 विराड् Cक. 11 प्रागादनु० C, K; प्राणादनु० G1, G2. 12 तावदा० B. 13 प्रवृत्या C; प्रत्या G1, G2. 14 ०स्याश्वान्यङ्गे या याश्चाघम् C. 15 ०मेवैषां C, K; ०मेविषां G1, G2, J.

"दैर्घश्रवसꣳ स्वासु यदि जीवेदिति तु भवति, न चेदशकन्मर्तुमुत दीर्घꣳ श्रृणुयादिति[1][2]।
अपि वा प्रायणार्थमेव स्यात् ।" Ārs. K. V. 62 a.
स्वारं[3] च [हिं[4]] भवति प्रवद्योनि चेति[5] ।
5 ककुबुत्तरासु ककुबुत्तरास्थानꣳ हि, सर्वबृहतीष्वेके ।
एवं स्वर्गकामयज्ञे ।
अपि[6] वा स्वर्गोक्तां[7] बृहतीं[8] स्वर्गकामयज्ञेऽचिकीर्षीत्[9][10] ।
पुरस्तान्नानाबृहत्य इति वा ।
तन्त्रे विप्रतिपद्यन्ते ।
10 ज्योतिष्टोममित्येके[11] ।
गायत्रीभ्यां जानीम इति ।
आशीस्तन्त्रमित्यपरम् ।
प्रवतीभिरयं क्लृप्तः ।
ता एताः प्रवत्य इति ॥ २ ॥

15 नवमः[12] पटलः

अथातश्चातुर्मास्यानि ।
स एष षडहो विहृतः ।
तत्र षाडहिकान् स्तोमान् करोति षडहन्यायेन[13] ।
ताꣳस्तु[14] यदेवं प्रयुङ्क्ते[15], एवꣳ रोहो भवति ।
20 अथापि नानादीक्षावभृथानीमानि[16] पर्वणि भवन्ति ।
तत्र सर्वाण्यहान्युपक्रमः[17] ।
स्तोमेन प्राचिक्रमिषीत्[18][19] ।
अथाप्येवमेनाननवच्छिन्नानन्ततोऽध्यवस्यतीति ।
अवयन्ति[20] तन्त्राणि पृष्ठानि सꣳस्था इति ।
25 अह्नां व्युत्क्रमादेकाहिकान्येकाहे[21], द्वैरात्रिकाणि द्विरात्रे ।
उद्धरति रात्रिमपरिकाण्डतया[22] द्व्यहस्य ।

1 चेदशतमर्तुमुत B; चेद्दशकर्त्तुमुत C; नवेदशकन्मर्तुमुपंत J. 2 दीर्घः B. 3 स्वा० B. 4 Wanting in B. 5 वेति C. 6 रोहोऽपि C, G1, G2, J, K. 7 ०र्गो G1, G2, J, K. 8 बृहक्तां G1, G2, J. 9 ०मे यज्ञे० C. 10 ०र्षन् B; ०र्ष G1. 11 प्रथमतन्त्रमि० C, G1, G2, J, K. 12 In B only. 13 G1, G2, J add ह. 14 ०स्तत्र C. 15 प्रयुज्यते B. 16 ०क्षावभृतानि B; ०क्षत्रे० G1, G2, J. 17 सर्वाणि C, G1, G2, J. 18 ०ह० C. 19 ०क्रमयिषीत् B. 20 उपयन्ति C; अपयन्ति G1, G2, J, K. 21 विक्रमादैका० C, K. विक्रमादैकानेकाहे G1, G2, J. 22 रात्र० B; G1, G2, J omit रात्रि० ··· उद्धरति (p. 117, 2.).

त्रैरात्रिकाणि त्रिरात्रे ।
उद्धरति वामदेव्यं चास्य प्रेत्नं[1] चापरिकाण्डतया त्र्यहस्य ।
नाना ब्रह्मसामानि, नानात्वार्थं[2] श्यैतनौधसवर्णानीति[3] ।
बार्हद्रथन्तरपृष्ठ्याद्यौक्तस्रुचमेवादाशरात्रिकम् ।
5 तदेतदर्पूर्णदर्वानुग्रहाय[4] ।
'शग्ध्यू३षु शचीपते' इति । SV. 1. 253; 2. 929; RV. 8. 61. 5.
प्रथमस्याह्नो ब्रह्मसामस्तोत्रीयो[6] वैश्वदेवस्यायँ स्थानमापन्नः, एँषा विश्व-
वती भवतीति ।
पञ्चप्रतिपत्कान्यहानि[8] ऋत्वभीज्यायाम्, पञ्चर्तुः[9] संवत्सर इति । cp. PB.
10 18. 9. 5; ŚB. 1. 2. 5. 12; 1. 5. 2. 16.
षण्णामह्नां प्रतिपदः, षड्तुः संवत्सर इति ।
"त्रिष्टुभं वैश्वकर्मणिकं[10] करोति ।
न हि गायत्री विद्यते[11] ।" Ārṣ. K. V. 65b.
समापद्यन्ते त्रिरात्रे भागाः, तदनु[12] द्रव्याणि ।
15 हाविष्मतं[13] द्वितीयेऽहनि त्रिरात्रस्य कुर्यादिति धानञ्जय्यः ।
ऋद्धिसामं[14] मा प्रच्योष्टेति ।
यौक्ताश्वमेवेति गौतमः ।
कृतँ हाविष्मतं[13] द्विरात्रे ।
तृतीयस्थानं च हाविष्मतं त्रिरात्रे[15] ।
20 तत्रैतत्[16] सँहितँ[17] शुनाशीर्यँ सन्तानार्यं[18]
'स सुन्वेयो वसूनाम्' SV. 1. 582; 2. 446; RV. 9. 108. 13; PB. 13. 11. 2.
'प्राणा[19] शिशुर्महीनाम्' इति । SV. 1. 570; 2. 363; RV. 9. 101. 1; PB. 13. 5. 3.
25 पञ्चमषष्ठाभ्यामुष्णिक्ककुभौ षडहं[20] समीप्सुः प्रत्याहरति ।
एतेन न्यायेन त्रिरात्रप्रभृतिष्वहर्गणेष्वेते[21][22] भवतः ।

---

1 प्रत्नं C, G1, G2, J, K. 2 नानार्थं C; ०र्थं G1, G2, J. 3 ०नि C, K. 4 ०दर्वा० C, G1, G2, J, K. 5 शन्ध्यूषु B. 6 ०त्रीया K. 7 एषां C, G1, G2, J, K. 8 ०प्रतिकान्यहाहाः वृत्वभी० G1, G2; ०प्रन्कान्यहाहाः वृत्वभी० J; ०प्रतिकान्यहान्मृत्वभी० K. 9 ०र्त्तवः B. 10 ०र्मणीं C, G1, G2, J, K. 11 ०न्ते B. 12 ०दानु० B; C, G1, G2, J, K repeat तदनु द्रव्यानि ··· अयारुचे ( p. 118 no. 13 ). 13 ०न्तं G1, G2, J. 14 ०सामाप्र० C; ०सामप्राप्तच्यो० G1. 15 J omits त्रे. 16 J omits त. 17 ०तः K. 18 ०नाद्य G1, G2, J. 19 प्राणाः C. 20 ०हमभीप्सुः प्र० K. 21 द्विरात्र० C, G1, G2, J, K. 22 ०द्वरगणेष्येते J.

न चेत्[1] [ कृ[2]तागमो भवति ।
द्विप[3]दातिच्छन्दसो दशरात्रन्यायेन, ते जगत्याः पुरस्तान्निदधाति ।
अन्तच्छन्दसी अन्त इति, तेऽयं[4] न सर्वान्ते नास्यवनच्छन्दोऽन्तेऽचिकीर्षीत् ।
5 तत्रैता वाजदावर्योऽन्तान्विताः—"अया रुचा" इति[5] । SV. 1. 463; 2. 940; RV. 9. 111. 1; PB. 16. 16. 8.
नित्यव[6]त्सा स्वयोनयः ।
एतेन न्यायेन त्रिरात्रप्रभृतिष्वहर्गणेष्वे[7]ते भवतः ।
न चेत् ] स्तोमसंरोधो भवति ॥ ३ ॥
10 अथैते सप्तदशाः ।
तत्र बार्हतेष्वाष्टमिकं पञ्चर्चं करोति, एतद्बृ[8]भक्तिनोह्न इति ।
तार्तीयकं रथन्तरपृष्ठेषु, एतद्रथन्तरभक्तिन इति ।
अ[9]निरुक्तः प्रथमः ।
तत्र यो द्रव्यविकारो निर्वाकार्थेन स भवति ।
15 अथ खल्वाह—"मारुती भवति, पौषी भवति, वैश्वदेवी भवति" इति । cp. PB. 18. 1. 14, 15, 17.
केनो[10] विद्यादेतद्देवत्या इमा भवन्तीति ।
एतद्देवत्येषु सू[11]क्तेषु समाम्नाता इति ।
यानि गोस्सामानि तानि सामानि[12] ।
20 अनुपृष्ठं संहितमेवैतदाग्निष्टोम्यात् क्रियते ।
स्वर्गकामयज्ञ उत्तरः ।
तत्र यो द्रव्यविकारः स्वर्गकामयज्ञत्वात् स भवति ।
अथ खल्वाह—"सोमपीथ[13]स्याऽविदोहा[14]य" इति । PB. 18. 2. 12.
एतदपायवदिति ।
25 स्वर्गका[15]मयज्ञ एवोत्तरः ।
त[16]त्र गोस्सामानि बा[17]हुदाक्षिण्यात् ।

---

1 B omits कृतागमो ⋯ न चेत् ( line 9 ). 2 कृप्तागमो G1, G2, J, K. 3 पदा० G1, G2. 4 ते यत्न G1; ते यन्त्र G2, J. 5 See p. 117 no. 12. 6 ०वश्य G1; ०वत्स G2, J. 7 ०ते ज्याष्ठ G1, G2, J; ०ते त्याष्ट० K. 8 द्वृहद्भ० C, G1, G2, J, K. 9 अग्निरुक्तः G1, G2, J. 10 को नो B; केना K. 11 Wanting in C; क्तेषु G1, G2, J. 12 ०न्यम् G1, G2, J, K. 13 C, G1, G2, J, K repeat तदनुद्रव्याणि ⋯ अया रुचे after ०पीथ; C puts ऽ after रुचे ( see p. 117 no. 12 ). 14 ०दोह्यायेत्यनन्यत्रभावा ये त्वेतदवोचदिति स्वर्ग० C, G1, G2, J, K. 15 ०काम एव यज्ञ G1, G2. 16 तत्रोमे सामनी C, G1, G2, J, K. 17 बहुदक्षि० C; बाहुदक्षि० G1, J.

अपि वा स्वर्गकामयज्ञत्वादेव ।
एवमिव ब्राह्मणं भवति—"अनड्वाहौ वा एतौ देवयानौ यजमानस्य यद् बृहद्रथन्तरे" इति । PB. 12. 4. 14.

वैश्ययज्ञ उत्तरः ।
5 तस्य कण्वरथन्तरम् ।
"अभि त्वा पूर्वपीतये" इति, SV. 1. 256; 2. 923; RV. 1. 19. 9; 8. 3. 7.

एतासु कुर्यादिति लामकायनः ।
यथा वाप्ययर्यायाः[2] शूद्रस्तल्पमुद्दिशेत्[3][4], अतो देशीयमेतद् ।
10 य एतद्रथन्तरस्यर्क्षु कुर्यात् एतासु त्वेव स्यात् ।
तासा॑ हि स्थानमापद्यते ।
अपि[5] चैताः परोक्षपृष्ठे[6] षडह इति ।
"सर्वबृहतीषु नान्यद्[7] बृहद्रथन्तराभ्यामर्हति ।
यत्[8] ककुबुत्तरासु[9] स्यात्" तं खलु विश्ववतीभिः कल्पयति । Ārṣ. K. V. 68a.
15
एतद्भक्तिर्वैश्य इति ।
तन्त्रे विप्रतिपद्यन्ते ।
ज्यौतिष्टोममित्येके[10][11] ।
गायत्रीभ्यां जागतीम[12] इति ।
20 आशीस्तन्त्रमित्यपरम् ।
विश्ववतीभिरयं क्लृप्तः ।
ता एता विश्ववत्य इति ।
तत्र यो द्रव्यविकारो वैश्वदेवीचिकीर्षया स भवति ।
यान्यायुषः सामानि तानि सामानि, अनुतन्त्रं यान्यन्यानि[13] पृष्ठानि[14], 25 ब्रह्मसामभ्यां विशोविशीयम्, उत्तरस्यामग्निष्टोमसाम[15] ककुबुत्तरासु ककुबुत्तरास्थान॑ हि ।

स्वर्गकामयज्ञ उत्तरः ।
तत्र खलु गोस्तन्त्रं करोति ।

---

1 Wanting in K. 2 अप्यन्यायाः B. 3 ०त० G1. 4 ०मुद्देशे० B; ०मुद्दिशे० G1, G2, J, K. 5 Wanting in C, G1, G2, J, K. 6 ०क्षे पृष्ठे C; ०क्षपृष्ठये G1, G2, J, K. 7 ०नान्यत्र K. 8 Wanting in C, K. 9 पक्षमुत्त० C; कुबुत्त० G1, G2, J. K. 10 ज्योति० C, G1, G2, J, K. 11 ०ष्टोमतन्त्रमि० G1, G2, J, K. 12 जगतीम G1, G2. 13 यान्यानि G1, G2. 14 पृष्ठ B, K. 15 ०साम्नि० B.

एतदन्तं[1] तन्त्रतरम् ।
अन्तविधोऽयं भवति ।
"अनिरुक्तं प्रातस्सवनम् ।" PB. 18. 6. 7.
तत्र यो द्रव्यविकारो निर्वाकार्थेन स हं[2] भवति ।
5 अथैतद्देवस्थानं स्थितनिधनम्, उतास्मिन् श्रीस्तिष्ठेदिति ।
तस्य रथन्तरं पृष्ठं वाजपेयसाम[3]भिर्बृहत् करिष्यन् भवति ।
[4]अह्नोक्तोऽर्कः, वाजोक्तमन्नम् ।
'त्वं नश्चित्र ऊत्या' इति SV. 1. 41; 2. 973; RV. 6. 48. 9.
वारवन्तीयमग्निष्टोमसाम ।
10 एता राध[5]स्वत्यः स्वर्गकामयज्ञेऽभिरूपाः [6]ककुबुत्तरासु ककुबुत्तरास्थानं हिं[7], सर्वबृहतीष्वेके ।
तद् व्याख्यातं सर्वस्वारे[8] ।
[9]अनुतन्त्रमुक्थ[10]प्रणयः ॥ ४ ॥
"अथैषोऽभिषेचनीयः ।" PB. 18. 8. 2.
15 "तस्य द्वात्रिंशाः पवमानाः ।" PB. 18. 8. 3.
अनुपूर्वमावृत्तिस्थानेषु पञ्चदशप्रभृतीन् बा[11]र्हतस्तोमानिति ।
ते प्रा[12]प्तस्थाना इति ।
तत्रोभे सामनी बा[13]हुदाक्षिण्यात् ।
अथाप्युभे वी[14]प्सायां अभिरूपे ।
20 उक्थसंस्थं करोति ।
द्वितीयेयमिज्या ।
तत्र द्वितीयां संस्थामिति व्याख्यातम् ।
बहिष्पवमानमन्यत् कविमतः ।
ते[15] खलु शश्वद् भाल्लविन आग्नेयीं पावमानीमुद्धरन्ति ।
25 यथा त्रिवृतं न वयमुद्धरामः, पृष्ठेभ्य इयं प्रति, एवं पृष्ठानामविलोप[16] इति ।
अथापि स्तोमः[17] प्रधानतरश्छन्दस इति ।
आनुष्टुभं प[18]र्यायं [19]करोति, आनुष्टुभोऽभि[20]राजेति ।

---

1 ०न्ततन्त्र० C, G1, G2 J, K. 2 Wanting in C, G1, G2, J, K. 3 ०महि० G1, G2, J, K. 4 अह्नोक्तो० C. 5 राद्धवत्य B. 6 ककुबुत्तरः सु B. 7 ०दभि B. ०स्थां हि० G1. 8 ०स्वारो C; ०सुरे G1, G2, J, K. 9 ०नत० B. 10 ०क्थः प्रणवः B; ०क्थप्रणयाय Cक. 11 भागस्तोमाने C, G1, G2, J, K. 12 प्राप्ता स्था० C, G1, G2, J, K. 13 आहुर्दाक्षि० C; बाहुदक्षिणयतयातथा० G1; बाहुदक्षिणयतथा० G2. 14 ईप्सायामभि० C, G1, G2, J, K. 15 तत्र C. 16 ०लोकप G1, G2, J. 17 सोमप्र० K. 18 पर्यासं C, G1, G2, J, K. 19 करोतीति B. 20 ०भो हिराजेति C; [illegible] G1, G2, J, K.

"तासां मध्यमामुत्तमां कुर्मः", सूर्यवत्यन्तेऽभिरूपेति । Ārs. K. V. 71a.

सम्भार्यान्वितान्याजयानि ।

अथ खल्वत्र राजसामानि करोति, राजसूयो राजसामानीति ।

5 एकादश करोति त्रिष्टुप्सम्पन्नानि, त्रैष्टुभोऽभिराजेति ।

सर्वच्छन्दस्यानि करोति ।

स्वस्य कृत्स्नविकाराय न पाङ्क्तं करोति, न हि पाङ्क्तं राजसाम विद्यते ।

एकमुदाहरन्ति सत्यश्रवसो वाय्यस्य—

'महे नो अद्य बोधय' इति । SV. 1. 421; 2. 1090; RV. 5. 79. 1.

10 अराजसूययाजी स बभूव ।

नेहाराजसूययाजिनां सामानि क्रियन्ते ।

बार्हतानि भूयिष्ठानि करोति ।

सवनच्छन्दो बृहती ।

अथाप्येतन्मध्यन्दिनच्छन्दो भवति ।

15 बार्हतानि वा भूयिष्ठानि लभन्तं इति ।

द्वे गायत्रीसामनी करोति ।

द्वे हि पवमानमुखयोर्गायत्र्यौ भवतः ।

ते कुशलं यदनुपूर्वं पञ्च माध्यन्दिने षडार्भवे, एवं रोहो भवति ।

देवस्थानं वरुणसाम सोमसामेति देवराज्ञाम् ।

20 सैन्धुक्षितं दैर्घश्रवसं पार्थं काक्षीवतं ब्राह्मणसाम सैद्राजसामसूपसङ्ख्यायते ।

क्षत्रमार्गेण चचार राजसूययाजी बभूवेति ।

दैवोदासं वाभ्रयश्वं वैतहव्यं त्रासदस्यवमिति मनुष्यराज्ञाम् ।

द्वैपद उक्थप्रणयः ।

25 विश्रंशाशङ्कमिदं कर्म ।

द्विविधेन प्रतिष्ठेति ।

---

1 कुर्युः C. 2 ०भो हि रा० C, G1, G2, J, K. 3 सर्वस्य C, G1, G2, J, K. 4 कृत्स्नीका० C, G1, G2, J, K. 5 बोधयन्ति । J. 6 राज० C, G1, G2, J, K. 7 नेह रा० C. 8 ०न्मा० C. 9 वाव C, G1, G2, J, K. 10 ०त C, G1, G2, J, K. 11 ०सामानी G1. 12 बहिष्पवमानं मु० C, G1, G2, J, K. 13 ०पूर्व्यं B. 14 ०नेव G1, G2, J; ०ने च K. 15 करोति इा for रोहो in B. 16 ०राज्ञ B. 17 सदद्राजसाःसू० B; साद्रसामसूयसं० G1, G2; साद्राजसामसूयसं० J. 18 ०ङ्कमुक्थं चयेन प्र० B. 19 ०ष्ठति G1, G2.

तत्रैतत् सत्रासाहीयꣳ सोढसं[1]हीयं नाम राजयज्ञेऽभिरूपम् ।
अनुपृष्ठमितरे ।
सदोविशीयं दशपे[2]यस्य मध्यन्दिने विशीयं राजयज्ञेऽभिरूपम् ।
वारव[3]न्तीयम् अग्निष्टोमसाम स्वास्वेवꣳ सु[4]वारवन्तीयमिति ॥ ५ ॥
5 "प्रतीचीनस्तो[5]म उत्तरः ।" Ārṣ. K. V. 72 a.
तं खलु बृहत्पृष्ठं करोति ।
एतद्भक्तिः क्षत्रिय इति ।
अतिरात्रसꣳस्थं करोति ।
चतुर्थीयमिज्या, तत्र चतुर्थीꣳ सꣳस्थामिति ।
10 अथापीदं [6]द्वितीयं यज्ञस्थानं, यदहीनो द्वितीयो वर्णः क्षत्रिय इति ।
ज्यौ[7]तिष्टोमं तन्त्रमेतत् ।
इह भक्तितन्त्रयोरयमु लोकः क्षत्रियस्येति ।
स्तोमकारित आवापः ।
व्युष्टिद्विरात्र उत्तरः ।
15 तत्रामुमेव द्विरात्रमाहरति ।
तत्र दशस्तोत्रीया उपाहरति ।
संवत्सरसम्पदे चतुर्विꣳशावुत्तरौ पवमानौ करोति ।
बहिष्पवमानसमाधये स[8]प्तदशत्रिणवौ प्राच्याव[9]र्यति ।
ता[10]वनन्तरयोः स्तोत्रीय[11]योरनुगृह्णाति ।
20 एकविꣳशान्युकथानि करोति ।
विश्वꣳशाशङ्को द्विरात्रः ।
तत्रामुमेव प्रतिष्ठास्तोममभिप्रायुङ्क्त ।
अथैतद् विꣳशोविशीयꣳ राजयज्ञेऽभिरूपम् ।
क्षत्र[12]स्य धृ[13]तिः किम[14]र्थमिति ।
25 आलुब्धजनपदोऽयꣳ राजा, तस्य क्षत्रसंयमार्थः क्षत्रसंयमार्थः ॥ ६ ॥

द[15]शमः पटलः

अ[16]थैतान् द्वन्द्वा इत्याचक्षते ।
तेन सर्वे द्वन्द्वा द्वन्द्वे[17] मिश्र[18]वन्तो भवन्ति ।

1 सोढवन्नाम रा० C; सोढवन्नमे रा० G1, G2, J. 2 दशवेध० B, K. 3 वारयन्तीयम् C. 4 सु is wanting in C. 5 B omits स्तोम. 6 J omits द्वितीयं ··· यदहीनो. 7 ज्यौ० K. 8 स सप्त० B. 9 ०यतो B. 10 वन० B, G1, G2, J. 11 स्तोत्रयोर० C, J, G1, G2, K. 12 क्षत्रियस्य C. 13 वृत्तिः B. 14 ०र्थं इति G1, G2, J, K. 15 In B only. 16 अथातो C. 17 द्वन्द्वान् G1, G2. 18 मिश्रास्तु C; मिश्रासु G1, G2, J, K.

यौ यावेषा ँ समानमर्थमुपकृतौ तौ [तौ[1]] द्वन्द्वौ भवतः ।
राज्यकामयज्ञः प्रथमः ।
तस्य यदेवंविधस्तोमयोग[2] एवमष्टावेकविंशान् सम्पद्यत इति ।
सप्तदशं पवमानेषु निदधाति ।
5 एष विद्स्तोमो भवति ।
विद्कामो राजा ।
अथाप्येते ग्रामा इव सुत्याया यत् पवमानाः सम्पूर्णा[3]श्छन्दोभिः सामभिरिति ।
तत्र विद्स्तोम ँ सप्तदशमचिकीर्षीत् ।
अनुपूर्वमावृत्तिस्थानेष्वितिशिष्टान् भागस्तोमान् ।
10 एवं चतुष्टोमो भवति ।
विश्र ँशाशङ्कमिदं कर्म ।
स चतुरेण प्रतिष्ठेति ।
व्याख्यातमौभयसाम्यमभिषेचनीये ।
ज्यौतिष्टोमं तन्त्रम्, तद् व्याख्यातं केशवपनीये ।
15 अन्नाद्यकामयज्ञ उत्तरः ।
तत्र चतुर्ऋचमाहरति ।
एतदन्नाद्यस ँस्तावमिति ।
आमहीयवादुत्तरमाश्रीकम् ।
एतद्वृष्टिस ँस्तावं वृष्टिजमन्नमान्धीगवादर्कपुष्पम् ।
20 एतदन्नाद्यस ँस्तावमिति ।
प्रजातिकामयज्ञ उत्तरः ।
तत्रैकर्चमुपाहरति ।
एषा वृषण्वती प्रजातिकामयज्ञेऽभिरूपा, अन्तरिक्षप्रवादान्तरिक्षायतना गन्धर्वाप्सरस इति ।
25 तत्र यो द्रव्यविकारः प्रजातिका[10]मयज्ञ[11]त्वात् स भवति ।
[12]शुशुत्सयज्ञ उत्तरः ।
"तस्य द्वादशं माध्यन्दिन ँ सवनं त्रिवृती अभितः ।" cp. Say. PB. 19. 4. 2
एवमिव ब्राह्मणं भवति—"यैकादशी", "या द्वादशी" इति । cp. PB. 19. 4. 3. 4.
30

1 Wanting in B, G1, G2, J, K. 2 ०विधःस्तो० C, K; ०विधःस्तौ० G1, G2, J. 3 पूर्णा छ० G1, G2, J, K. 4 ०गावर्त्ति० C, G1, G2, J, K. 5 चतुराच० B. 6 अथामही० B. 7 ०जमेवमन्न० C; ०मजन्न० G1, G2; ०जमन्ना० J. 8 प्रजापति० Cख, G1, G2, J, K. 9 ०नाय B. 10 काम is wanting in J. 11 ०यज्ञा G1; ०यज्ञात् G2. 12 शुश्रुत्स० C, K.

एकादशीः प्रातःसवन उपसश्चद्गीत द्वादशीस्तृतीयसवने ।
एवं गरस्य व्यपादानं सिध्यतीति ।
तदपि शश्वदध्वर्यव उदाहरन्ति[1] ।
स्तोमो वै त्रिवृतः, स्तोमो द्वादशः ।
5 यत् त्रिवृतो द्वादशमुपयन्ति पुनर्द्वादशात्[2][3]त्रिवृतं तस्मादेतेन[4] स्तोम[5] इत्युक्थसंस्थं करोति ।
एवमेतासां स्तोत्रीयाणां व्युपादानं[6] सिध्यतीति ।
स्तोमकल्पायैकं साम मध्यन्दिन[7] उपाहरति ।
स यन्मैधातिथम् ।
10 एतस्यारिष्टवती योनिः प्रायश्चित्तकृत्येऽभिरूपेति[8] ।
अत्रस्तो(?) यो द्रव्यविकारः शुशुं[9]तसद्यज्ञत्वांत्[10] स भवति ॥ ७ ॥
पशुकामयज्ञ उत्तरः ।
तत्र चतुष्पर्यायान् स्तोमान् करोति ।
"चतुष्पादाः[11] पशवः" इति । PB. 19. 5. 3.
15 तदपि शश्वद् ब्राह्मणं भवति—यच्चतुश्चतुर्हिङ्करोति ।
अथ[12] खल्वानुष्टुभः[13] प्रतिपदः करोति ।
पशुकामयज्ञे चतुष्पदा अभिरूपा इति ।
तास्तिस्रः सतीश्चतस्रो[14] गायत्रीः करोति ।
गायत्रीस्थानं हि भवति वारवन्तीयं यज्ञायज्ञीयं[15] चतुर्थेषूक्थस्तोत्रीयेषु ।
20 एवमिव ब्राह्मणं भवति—"नोक्थो नाग्निष्टोमः" इति । PB. 19. 5. 11.
यदु वारवन्तीयं पशुसंस्तावं च ।
अपि च स्तोत्रीयाणां सन्निवारणाय ।
"पशुकामयज्ञ एवोत्तरः ।" Say. PB. 19. 6. 1.
तत्र चतुर्ऋचमाहरति ।
25 एतत् पथ्यं छन्द इति ।
षोडशिसंस्थं करोति ।
एवमिव ब्राह्मणं भवति—"नोक्थ्यो नातिरात्रः" इति । PB. 19. 6. 3.
पशुकामयज्ञत्वाद् गायत्र उक्थप्रणयः ।

---

**1** उपाह० C. **2** त्रि is wanting in G1, G2, J. **3** ०शात्रि० B. **4** तस्मादेष C, G1, G2, K; तस्मादेषा J. **5** पुनस्तोम C, G2, J, K; पुनस्तो G1. **6** व्यापार्धान० B; न्युपाधान० G1, G2, J; ०नामुपाधान० K. **7** ०न उप० B. **8** ०पेऽत्येतो यो द्र० C; ०पेत्येतो यो द्र० G1, G2, J, K. **9** शुश्रु० C. **10** ०ज्ञवान् C. **11** ०पदाः G1, G2, J. **12** अत्रा B; अ G1, G2. **13** ०ल्वात्रानु० G1, G2, J, K. **14** सवती० B. **15** ०यं च० K.

पशुकामयज्ञावेवोत्तरौ ।
अपि वा द्विरात्राप्तिमुपकृतौ स्याताम् ।
उभयेज्यां[1]नियोगात् सप्तिसप्तदशौं[2]स्तोमौ करोति ।
एतौ पशुसंस्तावाविति ।
5 एकविंशमुत्तरस्य बहिष्पवमानं करोति ।
त्रिकं होतुराज्यम् ।
सप्रायावेकाहौ व्यां[3]विवर्तयिषन्नेतस्मिन् तदेकविंशे पराक्रम्य त्रिकेण वज्रेण बलं विभेदेति[4] लामकायनः ।
ता उ सप्तिसप्तदशावेव सम्पदेति ।
10 नानातन्त्रे नानापृष्ठे द्विरात्रन्यायेन सञ्चारयति चं[5] न च सञ्चारयति[6] ।
एकाहन्यायेनाहःसञ्चारणम् ।
द्विरात्रन्यायेनासञ्चारणम् ।
जनुषैकचौं[7] द्विरात्रन्यायेन निषेधान्धीगवे[8] द्विरात्रन्यायेनाञ्जत इति ।
कावमन्त्यम् ।
15 एषा सामा[9]न्या तृचप्रथमा पशुप्रवादेति ।
सत्रासाहीयश्रुध्ये[9] द्विरात्रन्यायेन, श्यावाश्वकौञ्चे द्विरात्रन्यायेन ।
'अग्रेगो राजाप्यस्तविष्यते' इति । SV. 2. 966; RV. 9. 86. 45.
कां[10]वमन्त्यम् ।
'अग्रेगो' इति ।
20 अह्वेयं[11] भवतीति शाण्डिल्यायनः ।
गोप्र[12]वादात्तु स्नातकाः कुर्वन्तीति ॥ ८ ॥
अपचितिकामयज्ञ उत्तरः ।
तत्र चतुर्विंशषष्ठा[13]न् करोति ।
एवमिव ब्राह्मणं भवति—"वि ह्वय[14]तियन्तीति ।" PB. 19. 8. 6.
25 चतुर्विंशत्रिणवाविति[15] वैतद् भवति ।
चतुर्विंशं पवमानयोर्निदधाति ।
तेन प्रच्युतौ त्रिवृत्सप्तदशावाज्यपृष्ठेष्वनुगृह्णाति ।

---

1 ०ज्यानि ज्योगात् तत्र स० C; ०निज्योगात्तत्र स० G1, G2, J, K. 2 ०शौ स्तो० C, G1, G2, J, K. 3 व्यावर्त्त० B. 4 ०भेदिति B. 5 व च न सञ्चा० G1, G2; J, K omit च. 6 ०येति G1, G2, J, K. 7 औदलान्धी० C, G1, G2, J, K. 8 ०म० B, Cक. 9 ०यंश्रु० C, G1, G2, J. 10 दावम० Cख; वदावम० G1, G2, J, K. 11 ०ह्वेयं B. 12 G1, G2 add राजाय स्तविष्यत इति after गो. 13 षष्ठान्… चतुर्विंशं (line 26) is wanting in G1. 14 ह्वयन्ती० C, G2, J. 15 ०वितीवे C, J, K.

ज्योतिष्टोमं [ तन्त्रम्[1], एतदपचिततरं तन्त्रयोरिति ।
स्तोमकारित आवापः ।
अपचितिकामयज्ञ एवोत्तरः ।
तस्योक्ताः स्तोमाः ।
5 तस्य यदेवंविधः स्तोमयोगः, एवं "विराजꣳ सम्पद्यत" इति । PB. 19. 9. 2.
द्विपदाः करोति ।
दशरात्रन्यायेन स यदेताः, एता दशरात्रावसाने[2] दृष्टा इति ।
तत्र वारवन्तीयमन्तसाम, अन्तच्छन्दसि ।
10 सूर्यवत्यो दशरात्रन्यायेन ।
अग्न्यभियजन उत्तरः ।
तत्रोभे सामनी करोति ।
अग्न्यभीज्यां कृत्स्नीचिकीर्षन् ।
तथाप्युभयसामाग्निर्भवति ।
15 उभाभ्याꣳ हि परिगीयत इति ।
ज्योतिष्टोमं ] तन्त्रम्, एतदाग्नेयमिति ।
स्वारꣳ सौपर्णं[3] पक्षिसाम पक्ष्यभीज्यायाम्[4], अग्नेर्व्रतम् अग्न्यभीज्यायाम्[5], स्वाशिरामर्कोऽग्न्यभियजने व्रते दृष्टो भवति[6] ।
अग्न्यभियजन[7] एवोत्तरः ।
20 तत्र ज्योतिष्टोममेवाहरति, एतदाग्नेयमिति ।
त्रिवृत्पञ्चदशावाज्यपृष्ठेषु[8] सम्पद्वशेन कुर्मः ।
व्याख्यातमौभयसाम्यम्[9] ।
ज्योतिर्[10]ह्येवायं विकृतः ।
तत्रौदलमनुष्टुभि तृचसमाप्तये ।
25 तदेतदष्टमात्[11] पृष्ठान्वितम् ॥ ९ ॥
राजयज्ञ उत्तरः ।
तत्र द्वे स्तोत्रीये पाहरति ककुद्रूपं दिदर्शयिषन् ।
अपि वा सदोविशायसामान्ते[12] गृह्यमाणे सप्तदश कारयेताम् ।

1 B omits तन्त्र ... ज्योतिष्टोमं ( lines 1–16 ). 2 °वमाने C. 3 °पर्कर्ण B; °पर्ण J. 4 पक्ष्यभीष्टायाम् Cक; पक्षाभी( भि J )° G1, G2, J, K. 5 °भीष्टायाम् Cक; °भीज्यांयाम् G1, G2. 6 Wanting in B. 7 °भिजन B; अग्नियजनग्न्याभीज्यायव्रते G1, G2, J; अग्नियजन K. 8 °ष्ठे J. 9 °साम्यं C, G1, G2, J, K. 10 ज्यौ° B. 11 तदष्टमात् G1, G2; तपृष्ठमात् J. 12 °समन्ते B, K; °समांत G1, G2, J.

विषमे स्तोमे सत्यनध्यासां बृहतीं करोति ।
ज्यो[1]तिष्टोमा[2]त् तस्याः सा[3]मकल्पो व्याख्यातः ।
अग्निष्टुति व्याख्यातमौभर्य[4]साम्यम् ।
ज्यो[5]तिर्ह्येवायं विकृ[6]तः ।
5 तत्र गौरीवितमनुष्टुभि, एतद्वषभोक्तमिति ।
वैश्ययज्ञ उत्तरः ।
वैश्यस्य राजमात्रस्य स्वाराज्यमि[7]च्छतो यज्ञः स्यादित्याहुः ।
राज्ञ एव खल्वयं संवि[8]रतस्य साहसिक्याद् ।
विड्भूतस्य कितवाशयस्य सवः स्यादिति शाण्डिल्यः ।
10 अभिषेचनीयं प्रत्युपधावति ।
सवसामान्याद् द्वात्रिंशा[9]पायादनुष्टुभः प्रतिपदोपयन्ति ।
कु[10]शलं यदुपव[11]तीमेषा राथन्तरी, राथन्तरो वैश्य इति ।
व्यत्यासेन नित्यां बृहतीं करोति ।
समो हि स्तोमः ।
15 व्याख्यातावुत्तरौ ।
राजयज्ञ उत्तरः ।
तं खलु बृहत्पृष्ठमिन्द्रन्यङ्गाभिः कल्पयति ।
एतद्भक्तिः क्षत्रिय इति ।
तत्र या इन्द्रवत्यो विस्पष्टास्ताः ।
20 अथापि वृत्रहप्रवादेन वृ[12]षणवत् प्रवादे[13]न सू[14]र्यवत्तयेत्यैन्द्रं रूपमनुगृह्णन् मन्यत इति ।
तन्त्रे विप्रतिपद्यन्ते ।
ज्योतिष्टोम[15]मित्येके ।
गायत्रीभ्यां जानीम इति ।
25 आशीस्तन्त्रमित्यपरम् ।
इन्द्रवतीभिरयं क्लृप्तः, ता एता इन्द्रवत्य इति ।
तत्र यो द्रव्यविकार ऐन्द्री[16]चिकीर्षया सं[17] भवति ।
राजपुरोहितयोर्यज्ञ उत्तरः ।

1 ज्यौ० K. 2 ०म्यात् C, G1, G2, J, K. 3 साकमल्पो Cख, G1, G2, J. 4 ०यं सा० K. 5 ०तिविर्ह्ये० G1, G2, J, K. 6 प्रवि० G1, G2, J, K. 7 ०मीप्सतो C, G1, G2, J, K. 8 सविपरीतस्य B; 9 ०शादपायाद० C; ०शपायाद० G1, G2, J; ०शापयोद० K. 10 कुलं B. 11 ०वीती० G1, G2, J, K. 12 वृषावत् B; wanting in G1, G2. 13 Wanting in G1, G2. 14 सूर्यवर्त्तीयन्त्यैन्द्रं B. 15 ०मं तन्त्रमि० C; ०मतन्त्रे । G1, G2; ०मतन्त्रमि० J, K. 16 ०न्द्रे चि० B. 17 संभ० G1, G2, J, K.

तत्रोभे सामनी, उभयानि व्यञ्जनानि, द्वैयज्ञा[1] ज्योतिष्टोमं तन्त्रं नित्यं ब्राह्मणस्यो[2]क्तो[3] यज्ञं[4] क्षत्रियस्य ॥ १० ॥

विजिघां॰सद्यज्ञ उत्तरः ।
तत्रोभे सामनी करोति ।
5 विजिघां॰सद्यज्ञं कृत्स्नं[5] चिकीर्षन् ।
तत्रैतद् विशोविशीयं विजिघां॰सद्यज्ञेऽभिरूपम् ।
सोमसामाथर्वणं वेत्यभिचरतः ।
सोमसामैतत् क्रूरनिधनम् ।
तस्य निधने विचारयन्ति—
10 "इन्द्र इव दस्यूं॰ रमृणा २३१११ सूर्य इव दस्यूं॰ रमृणा २३१११ वज्रिन् सुवज्री २३१११ न् ।" LŚ. 7. 10. 12; cp. Upg. 3. 8.
"अपि[6] वैतेषां द्वे पूर्वे वोत्तरे वा सर्वाणि वा समस्यन्नन्त्यमेव स्वरयेद्[7], यथा वायोर्भस्त्राया[8] निहन्यमानायाः[9] ह्रादः स्यात्, यथा वायसी[10] समृच्छेयाताम्, यथा [ वा ] निष्कः[11] कृन्तत्रेणाभिहतो[12] ध्वनेत्, यथा
15 वा सनूपुरस्य[13] पादस्य [14] निघातस्य ।" cp. Upg. 3. 8.
हुण्णिति चाथर्वणम् ।
पशुकामस्यैतच्चतुर्निधनं पशुकामयज्ञेऽभिरूपम् ।
एवमर्थं[15] प्रवोत्तरः ।
अपि वा[16] नाज्ञातप्रायश्चित्तये, यत्रानाज्ञातं[17] भयमागच्छेत्, यथा मटिवमा[18]-
20 जगाम ।
यथा विहनु[19] शिरो, यथा वयः[20]पतनम् ।
तदप्येवमिव ब्राह्मणं भवति—"इन्द्रमदेव्यो माया असचन्त[21]" इति शाण्डिल्यायनः । PB. 19. 19. 1.
एवं नूनं तद्विदाञ्चकारेति[22] ह स्माह धानञ्जय्यः ।
25 यदर्थं इ[23]ममाजहारानाज्ञात इव खल्वयं योगो भवति ।
तत्र त एव स्तोमा ये पूर्वस्य ।
तां[24]॰स्तु यदेवं प्रयुङ्क्ते[25] सम्प्रायावेकाह्नौ [26]व्यावर्तयिषन् ।

1 द्वै C, G1, G2, J; द्वैयज्ञान् is suggested here. 2 °णमु° B. 3 °क्ता B, K. 4 °यज्ञं G1, G2, J, K. 5 कृत्स्नीं B. 6 B omits वै. 7 °रायद् G1, G2, J, K. 8 वायेभ° G1, G2, J, K. 9 °माना G1, G2. 10 °यसौ C. 11 Wanting in B; व K. 12 तंतत्रेयाभि° G1, G2. 13 °न्नपु° C, G1, G2, J; संत्तपु° K. 14 नूखात् स्यात् B. 15 °मेव G1, G2. 16 G1, G2, J omit वा. 17 यत्राज्ञा° K. 18 भागचमा° B. 19 यथापि हनु B. 20 वयःप° C, G1, G2, J, K. 21 असृजन्त K. 22 रोति G1, G2, J; °कति K. 23 इदम° B. 24 मार्गंस्तु B; तं॰स्तु G1. 25 °क्षेण प्रा° C. 26 व्यावर्त्त° B.

तन्त्रे विप्रतिपद्यन्ते ।
उभयसामतन्त्रमित्येके ।
प्रत्नवत्यो ह्येता माध्यन्दिनीया इति ।
आशीस्तन्त्रमित्यपरम् ।
5 अनाज्ञातप्रायश्चित्तयेऽयम् ।
तत्रानाज्ञातयोगा[1]ंश्चिकीर्षन् गायत्र्यो[2]ः स्थाने[3] द्वे बृहत्यौ निदधाति ।
ते संव्यूह्य[4] तिस्रो गायत्रीः करोति ।
गायत्रीस्थान९ हि भवति ।
तत्र यो द्रव्यविकारोऽनाज्ञातप्रायश्चित्तये स भवति ।
10 अपि च विजिघांसया ॥ ११ ॥
अभिचरणीयावेवोत्तरौ ।
तयोः श्येनेनैव[5] द्रव्यसमुद्देश उक्तः ।
ये पूर्वयोः पूर्वस्य स्तोमास्ते[6] तयोः पूर्वस्योद्धरति ।
सप्तदशनवदशौ प्रजापतिस[7]ंस्तावाविति ।
15 षडतिशिष्टौ[8] द्विस्तोत्रभाजः करोति, सन्दंशरूपं दिदर्शयिषन् ।
येडं ककुभि करोति, पुरुषच्छन्दसः स्वरं विच्यावयिषन् ।
तत्रैतत् काशीतं त्रीणस्वरेडं[9], त्रयं परेषामिच्छन्तीति[10] ।
सामानुष्टुभि करोति , एतानि क्रूराणि सामानीति ।
स यत् त्रयाणां प्रथममायतनामिति[11], पूर्वाध्यायं पूर्वे यज्ञस्थाने ।
20 अथाप्येतत् क्रूरणिधनं वधार्थेऽभिरूपम् ।
अथापि बृहन्निधनेनानुगृह्णाति, एष[12] वै सामवज्र इति ।
बृहद्रथन्तरयोर्वदति ।
स्तोभकल्पा[13]योत्तरे विहितवन्तौ[14] तृचावाहरति ।
तत्र देव[15]साम स्यादिति धानञ्जय्यः ।
25 समानार्थौ[16] हि भवतः ।
द्वितीयमिति गौतमः ।
सप्रायावेकाहौ व्यावर्त्तयिषन्[17] ।

---

1 तन्त्रो० B; तात्राता G1; तंत्राना० K. 2 ॰त्र्या G1, G2, J, K. 3 Wanting in G1, G2, J. 4 संव्युह्य C, G1, G2, J, K. 5 श्येनैव C, G1, G2, J, K. 6 ०मात्वे B. 7 प्रजापति० G1, G2. 8 ०ष्टाद् C; ०ष्टान G1, G2. 9 ०स्वतरैडं B. 10 ०न्तीति B. 11 प्रथमेतदानुष्टुभ( ०भि K )मिति C, G1, G2, J, K. 12 एषु B. 13 ०ल्प K. 14 ०ह० B. 15 तदेव सा० C. 16 ०र्थो K. 17 ०वर्तयिषन्त B; व्यावि-वर्त्तयिष्यत् G1, G2, J, K.

अथाप्येतद[1]भिनिकृष्टगीति[2] वधार्थेऽभिरूपम् ।
वज्रो[3]क्तं प्रमँहिष्ठीय[4]मुक्तो यज्ञमौपगवम् ।
ऐडत्वात् षोडशिसाम्नो[5] न[6] नार्मेधं करोति ।
तत्रैतदुद्वँशीयम् । एतेनैडाकामश्च सिध्यति, अजामिकल्पश्चेति ॥ १२ ॥

5 महानाम्नीः षोडशि[7]साम ।
एता वज्रोक्ता राजयज्ञेऽभिरूपाः, वज्रो[8] हि राजेति ।
कथं धर्मा इति ।
कर्त्तव्या इत्येके ।
अपि ह्यासामेव स्वाध्याये धर्मो भव[9]तीति । cp. Upg. 3. 5.
10 अथापि धर्मि[10]स्थानमापन्नाः ।
षोडशिधर्मान् कुर्वन् कथं महानाम्नीनां धर्मान् न कुर्यादिति ।
अथापि वज्रोक्ता आप [11]इति ।
अथापि सँशये[12]ऽलोपो लोपान्[13] न्याय[14]तर इति । cp. Upg. 3. 5.
अकर्त्तव्या इत्यपरम् ।
15 पृष्ठापन्नानां वदति यद[15]प उपनिधाय स्तुवत इति ।
यद्वै[16]तदपि ह्यासामेव[17] स्वाध्याये धर्मो भवतीति, अन्या[18]नप्येवंवादः स्वाध्यायधर्मान् प्र[19]तीयाद् । cp. Upg. 3. 5.
यद्वैतद् धर्मिस्थानमापन्ना इति, धर्मिस्थानमापन्नतरं खलु सदृ[20]ढंतरं न धर्मा[21]ल्लभते ।
20 यद्वै[22]तद् वज्रोक्ता आप[23] इति, शान्त्युक्ता आपः, "अपः[24] पश्चात् पत्न्य उपसृजन्ति, वैश्वानरमेव तच्छमयन्ति, आपो हि शान्तिः" इति ह्याह । PB. 8. 7. 8.
यद्वैतत् सँशये[25]ऽलोपो लोपान्[26] न्यायतर इति, यो र[27]थन्तरधर्मानकृत्वा महानाम्नीनां धर्मान् कर्तव्यान् म[28]न्येत सदृ[29]शंव्याघातः ।
25 अथापि तस्य वज्रोक्ततरा धर्मा इति धर्मा इति ॥ १३ ॥

---

1 ०दमितआत्तिसिष्टगीति B. 2 ०गीभि G1, G2, J, K. 3 यज्ञोक्तं B. 4 ०ष्ठीयं मु० G1, G2, J, K. 5 ०म्ना G1, G2, J. 6 C omits न. 7 ०श० G1, G2. 8 ०ज्री G1, G2, J, K. 9 भवति G1, G2, J, K. 10 धर्मि is wanting in B. 11 Wanting in C, G1, G2, J, K. 12 ०योलो० C, J; ऽलोपो is wanting in J. 13 ०पा G1, G2, J, K. 14 ०य्य० C. 15 ०दा G1, G2 but G2 adds प. 16 तद्वै० G1, G2. 17 ०मे G1, G2. 18 अन्यान् is wanting in C. 19 कुर्याद् C, G1, G2, J, K. 20 सद्रथन्तरं C, G1, G2, J, K. 21 ०र्माल्लं० C; ०र्माल० G1, G2, J, K. 22 G1, G2 omit यद्वै. 23 आपन्न C. 24 यः K. 25 G1, G2, J omit लोपो. 26 ०पा G1, G2, J, K. 27 ये B. 28 मन्यत G1, J; मन्य तत् G2. 29 ०द्वयमद्न्याव्या० G1, G2, J, K.

# अथ अष्टमः प्रपाठकः[1]

अथातो[2] अहीनाः[3] ।
तेषामुक्तो द्रव्याणामन्वयः ।
अथापि दशरात्रा[4]वलोपाहीनाः ।
तत्र सिद्धानि दाशरात्रिकाणि द्रव्याणि ।
5 आहीनिक्यां[5] रात्रेः श्रौतकक्षस्य[6]र्चोऽप[7]नयति ।
सत्रं चा[8]हीनं च व्यावि[9]वर्तयिषन् ।
तत्रैताः करोति—
'पन्यंपन्यमित्सोतारः' इति । SV. 1. 123; 2. 1007; RV. 8. 2. 25.
एताः सुतवतीनाꣳ स्थाने सुतवत्य इति ।
10 "मध्यमस्य रात्रिपर्यायस्य होतृषामणी विचारयन्ति ।
दैवोदासं[10] वा स्यादौर्ध्वसद्मनं वेति ।
विकल्पो वा स्यात् ।" Say. PB. 9. 2. 12.
अपि[11] वा दैवोदासमहीने[12] कुर्यात् ।
पूर्वाध्यायं पूर्वे यज्ञस्थाने, और्ध्वस[13]द्मनं सत्रेषु, उत्तराध्यायमुत्तरे यज्ञस्थाने ।
15 अथाप्यस्मिन् सत्रवादरूपो भवति ।
"और्ध्वसद्मनमपि शर्वरीषु प्रोहन्ति ।" [इति[14]] । PB. 9. 2. 10.
अथ खल्वाह—"त्रिणिधनं भवति" इति । PB. 9. 1. 14.
कथं त्रिणिधनꣳ स्यादिति ।
एतान्येवं[15] निधनानि व्यवस्यन्त उपेयुः, सुवृक्तिभी २३४५ नृमादना
20 २३४५ म् भरे २३४५ षु वा २३४५ इति ।

---

1 In C only. 2 G1, G2 add ॐ. 3 अह्नीनां B. 4 ०त्राविल्लोपो० B. 5 ०क्या रा० B. 6 ०स्यार्षेऽप० G1, G2, J, K. 7 ०पायति B. 8 वादीनां G1, G2, J. 9 व्याव० B, C. 10 ०सा G1, G2, J. 11 वापि G1, G2, J. 12 ०हीवने G1, G2, J. 13 अर्द्धेस० G1, G2, J. 14 Wanting in B. 15 एतान्येतान्येव C; एतानेताने G1; एतानेव G2; एतान्येतानेव J.

तदा[1]हुः—जने[2]च्छं त्रिणिधनं यद[3]नन्तराणि निधनानीति ।
अथवैतानि वि[4]हृतान्यनुपदमुपेयुः ।
तत्र नि[5]न्दा यदनुपायान्निधनानामभिव्याहारः ।[6]
अथवा एतानि पृथक्स्तोत्रीयासू[7]पेयुः ।
5 तत्र[8] निन्दा यत् संप्रायाणां निधनानां विप्रयोगः ।
यथासमाम्नायमेवोपेयुः ।
अथापि यथासमाम्नायमेवै[9]र्तत् ।
स त्रिणिधनं भवतीति शाण्डिल्यायनः ।
य[10]त्तिस्रो निधन[11]मात्रा भवन्तीति सर्वेषु पदेष्वभ्यासात् ।
10 सौमेधꣳ रात्रिषामेत्याचक्षते ।
कौत्स[12]महीनादपनयति, स[13]त्रं चाहीनं च व्या[14]विवर्तयिषन् ।
तत्रैतदाष्टा[15]दꣳष्ट्रमृद्धिसꣳस्तावम् ।
'आ त्वा विशन्त्विन्दवः' इति । SV. 1. 197; 2. 1010; RV. 1. 15. 1.
15 एतास्वेताः सोम[16]वतीनाꣳ स्थाने सोमवत्य इति ।
समुद्रप्रवादा[17] आ[18]वत्योऽन्तेऽभिरूपा इति ॥ १ ॥

बुभूषद्यज्ञ उत्तरः ।
अपि वा षडहा[19]प्तिमुपकृतः स्यात्, एतेषाꣳ स्तोमानामुपधानात् ।
तत्रोमे साम्नी बार्हतं त[20]त्रं बृहत्पृष्ठ[21]स्योपवती[22] प्रतिप[23]त् ।
20 [ क[24]स्य हेतोरिति ।
बुभूषद्यज्ञोऽयं भवति ।
अनवधारितकाम इति लामकायनः ।
तत्र सर्वाभिप्रायां प्रतिपदमन्विचिकीर्षीत् ।
अथापि षडहोऽयं संलङ्घितः ।
25 सैषा षडहप्रतिपद् ] भवति ।

---

1 Wanting in B. 2 नेक्थं B; जनेच्छन् C. 3 ०दन्त० K. 4 वृह० B; हृता० G1, G2. 5 निन्दानुपायानां नि० B. 6 C repeats this line. 7 ०रूपेयुः G1, G2, J. 8 तन्निन्दा० B. 9 ०मेतत् C, G1, G2. 10 वक्ति ति० B. 11 ०नं न मात्रा G1, G2, J. 12 ०सं ही० B. 13 स्त्रिा निधनं न मान्यं सत्रं चा० G1; स्रो निधनं न मात्रा सत्रे चा० G2. 14 व्यावर्त० B, C. 15 ०ष्ट्रा० B. 16 स्तोम० G1, G2. 17 ०दान् B. 18 भवत्यो० B; आवत्यान्ते० C; आवन्त्यो० K. 19 षडहा इति तदुपकृतस्थात् B. 20 तत्र B. 21 पृष्ठास्या० G1, G2, J, K. 22 ०वतीति C, G1, G2, J; ०वति K. 23 ०पक्षस्य G1, G2, J, 24 B omits कस्य ··· पद (line 25).

अथाप्युभे स्थानवती अचिकीर्षीत् ।
तन्त्रेण बृहत्प्रतिपदा रथन्तरमिति ।
अथाप्येतामेवान्यवेदाः समामनन्ति ।
आन्धीगवादुत्तरमाथर्वणम् ।
5 षडहोऽयꣳ संलङ्घितः ।
तदेतत् प्रायश्चित्ति[1]साम ।
पशुकामयज्ञ उत्तरः ।
अपि[2] वा द्विरात्राप्तिमुपकॢप्[3]तिः स्यात्, एतेषाꣳ स्तोत्राणामुपधानात् ।
दशरात्राप्तिं वा, छन्दोमानामुपधानाद् ।
10 व्याख्यातमौभयसाम्यम् ।
अनुपृष्ठं तन्त्रम्, द्वयान्याज्यानि, द्वयानि पृष्ठानि ।
द्वैविध्यात्[4] स खल्वाप्तोर्यामाणां पृष्ठानां वैश्वजितानि पृष्ठानि गर्भान्[5] करोति ।

एतानि नानात्वकॢ[6]प्तानीति ।
15 अथाप्येवमाप्तिरितरा[7] दशरात्रस्येति ।
स[8] कस्य हेतोर्गर्भान्[9] करोतीति ।
एवꣳ हि शश्वद्बह्वृचा[10] अधीयते—गर्भवन्ति पृष्ठानि भवन्ति, आप्तोर्यामस्य तानि, गर्भकारꣳ शꣳसेत्, पशवो वै पृष्ठानि, यद् गर्भवन्ति भवन्ति प्रजननेनैव पशून्त्समर्द्धयन्तीति ।
20 बृहद् वैराजगर्भं करोति ।
बार्हतं वै वैराजम् ।
तेनैव तदनुरूपगर्भं वामदेव्यं महानाम्नीगर्भं करोतीति[11] ।
आपो वै वामदेव्यम्[12] ।
आपो[13] महानाम्न्यः ।
25 तेनैव तदनुरूपगर्भं श्यैतं वैरूपगर्भं करोति ।
"पशवो वै श्यैतम् ।" PB. 7. 10. 13.
"पशवो[14] वैरूपम् ।" PB. 14. 9. 8.
तेनैव तदनुरूपगर्भं कालेयꣳ रेवतीगर्भं करोति ।
ऐडं वै कालेयम् ।

---

1 ०त्ति याम B; ०त्तिः स्या मा C; ०त्तिम G1, G2, J. 2 Wanting in G1, G2, J. 3 ०तः K. 4 ०विधात् G1, G2, J, K. 5 गर्भा C; गर्भा G1, G2, J. 6 नानाक्लृताप्तनीति B. 7 ०प्तित० G1, G2, J, K. 8 Wanting in G1, G2, K. 9 ०र्भानि G1, G2, J. 10 ०च G1, G2, J, K. 11 करोति C, G1, G2, J, K. 12 Wanting in G1, G2, J. 13 आथो G1, G2, J. 14 PB adds वै.

ऐडा रैवत्यः ।
तेनैव तदनुरूपगर्भम् ।
अथो[1] द्रवदिडं कालेयम् ।
[2]कस्तेडा रैवत्यः ।
5 “तस्मिन् मि[3]थुनादेव प्रजायते” इति । cp. PB. 16. 14. 6; 19. 11. 7.
“अपि वा सर्वाण्यावर्[4]तीनि वै[5]श्वजितैरावर्[6]त्तिभिर्गर्भ[7]वन्ति कुर्यात् ।
तत्र बृहत् सञ्चरते ।
तस्य वैरूपं विधृ[8]त्या इति ।” Ārṣ. K. V. 86b.
“तत्र[9] गर्भ[10]विधा[11]नमाहुः—मध्यमं पर्यायं[12] स्वस्तोत्रीयं गर्भं कुर्[13]यात्, प्रथमो-
10 त्तमौ मुख्यस्य, एवं गर्भोपपत्तिर्भवतीति ।” Ārṣ K. V. 86a.
“कथं धर्माः[14] ।
[कर्त्तव्या[15]] इत्येके ।
गर्भभूतानि भवन्त्यनु[16]भूतानि, अधर्मा गर्भो भवतीति ।
[17]कर्तव्या इत्याचार्याः ।” Ārṣ. K. V. 87a.
15 तत्र तान्येव [18]वचनानि यानि विश्वजिति, सुरूपं जराबोधीयस्य स्थाने, एतत् पशुसंस्तावमिति ।
उद्धरत्याथर्वणं द्विपदा ।
अत्र करिष्यन् भवति ।
तत्रैतत् सौ[19]हविषमभ्यस्तगीत्यतिरि[20]क्तमतिरिक्ते [21]कल्पे ॥ २ ॥
20 प्र[22]जातिकामयज्ञ उत्तरः ।
तत्र यो द्रव्यविकारः प्र[23]जातिकामयज्ञत्वात् स भवति ।
व्याख्याता उत्तरे ।
[24]अथै[25]ते एकस्तोमाः, एतान् कामानभ्युपक्रताः ।
यथैतद् ब्राह्मणम् ।

---

1 अधो B. 2 कम्रस्ते० B. 3 G1, G2, J, K add मिथुनं. 4 ०वर्तीति GJ; ०वर्तीभि० G2; ०वर्तीमि J; ०घृत्तीनि K. 5 विश्व० G1, G2, J. 6 ०वृत्तिभि० K. 7 ०र्गर्भ भवन्ति G1, G2, J. 8 ०विघृ० B. 9 Wanting in B. 10 G1, G2, J add विधानं. 11 ०र्भाधान० B. 12 सस्तोत्रीयं C, G1, G2, J, K. 13 कुर्वात् C. 14 C, G1, G2, J, K add इति. 15 Wanting in B. 16 ०नुच्यभू० G1, G2, J; ०नूच्यभू० K. 17 C, J repeat here कथं धर्मा … भवतीति. 18 विव० C, G1, G2, J. 19 सौविष्म० B. 20 ०क्तप्रतिरिक्ते G1, G2, J, K. 21 Cख, G1, G2, J, K write the first three sentences of the next section after कल्पे. 22 प्रजापतिकाम० Cख; प्रजापतियज्ञ G1, G2, J, K. 23 प्रजापति० G1, G2, J, K. 24 G1, G2, J, Cख, K begin the 3rd section from here. 25 ०थैकत G1, G2.

अथाप्येकस्तोमान्यहीनिकान्यहानि ।
सोऽन्ते[1] न्यायमदिदर्शयिषीत्[2] ।
तत्[3] खलु बृहद्रथन्तरपृष्ठान् कुर्मः ।
राथन्तर[4]बार्हता ह्येते स्तोमा इति ।
5 ज्यौति[5]ष्टोमं तन्त्रम् ।
ज्यौति[6]षा ह्येते स्तोमा इति ।
तत्रानुपृष्ठं द्रव्यागमः ।
षोडश्याः[7] षोडशिनोऽनुब्राह्मणं वेति विचारयन्ति ।
किꣳ स्तोमा अनुब्राह्मणꣳ स्युरिति ।
10 एकविꣳशस्तोमा इति ।
एष एषां प्रकृतिस्तोमो भवति ।
अथाप्याहुः—अह[8]स्तोममहः प्रथमोत्तमयोरन्वियाताम्[9] ।
एकविꣳशं तु पञ्चदशस्य कुर्यात् ।
पञ्चदशꣳ सप्तदशस्य ।
15 एवं तꣳ[10] स्तोमꣳ सꣳस्तुतोऽतिरात्रः सम्पद्यते ।
अथो यस्तस्याह्नो भवति, अहस्तोमं त्वेवान्वि[11]युरित्यनुब्राह्मणम्[12] ।
अनु[13]व्यूढमित्येतत् स्यात् ।
यो वा ह्यह्नः स्तोमः सं[14] षोडशिनो[15] न्यायेन ।
यो वा ह्रसीयानित्य[16]ह्नः[17] स्तोमं चैन[18]मनुयन्[19]तं पश्यामः ।
20 "अथातो द्विरात्राः ।
तत्र ज्योतिष्टोमसर्वस्तोमौ समस्यति ।" cp. PB. 20. 11. 1.
मा विलोपे भूयान् विलोपो भूदि[20]ति च दाशरात्रिकाणा[21]महा द्वे करोति ।
अथैतानि दशरात्रस्यान्त्या[22]हानि चतुर्थषष्ठे नवमदशमे इति ।
एतेषां द्रव्याण्यहीनान्तेषु[23] चिकीर्षितानि ।
25 तत्रोत्त[24]रत्र बहिष्पवमानम् ।

1 ०न्तन्या० C. 2 ०षं G1, G2. 3 तान् G1, G2, J, K. 4 रथ० C, G1, G2, J. 5 ज्योति० C, G1, G2, J. 6 ज्योति० C, J. 7 ०शाः B, G1, G2, J, K. 8 अस्तोममह G1, G2, J, K. 9 ०न्वितायामे० G1, G2, J, K. 10 ततꣳ० G1, G2, J. 11 ०न्वी० B, G1, G2, J, K. 12 ०णमिति C, G1, G2, J, K. 13 अतनु० B. 14 Wanting in G1, G2, J, K. 15 ०शिन्यो B; ०शिना G1, G2, J, K. 16 ०यादि० C. 17 ०ह्नः G1, G2, J, K. 18 चैवम० K. 19 ०यत्त C. 20 ०भूरिति G1, G2; भूरिती J, K. 21 ०णां न C, G1, G2, J, K. 22 ०न्ता० C, G1, G2, J, K. 23 ०न्ते G1, G2. 24 ०त्तत्र G1, G2, J, K.

अन्यत् प्रतिपदो नावमिकम् ॥ ३ ॥

अथैते द्दाविष्मतह्वाविष्कृते ।
ह्वाविष्कृतं[1] पूर्वस्याह्न आर्भवचरꣳ स्थानापन्नं भवति ।
द्वितीयस्थानं च ह्वाविष्मतम्, उत्तरस्य माध्यन्दिने सꣳहितं च ।
5 भागविलोपे भागसन्तानाय निकामयते ।
अपि चैवꣳ सती नेदीयसी ह्वाविष्मतह्वाविष्कृते भवत इति ।
जनुषैकर्चा[2]विहर्गणन्यायेन त्रैशोकवैखानसे जागतस्य भागस्यानुग्रहाय ।
अहीनान्तेष्वर्काश्चिकीर्षिताः ।
सꣳरोधान्विह दीर्घतमसो[3]र्कः ।
10 विपर्य[4]येणेतरयोराप्तिः ।
स यदेतास्वे[5]वैं स्वयो[6]निः ।
अथाप्येतौ[7] धृतवत्यो[8] दक्षितवत्यो[9]ऽन्तेऽभिरूपा इति ।
ज्यो[10]तिष्टोमान्युक्थान्यहीनान्तेषु चिकीर्षितानि ।
एवं पथ्यावसानमिति ।
15 आयुषमुत्तरस्य द्वितीयं करोति ।
एते सप्रायास्त्रिकद्रुका इति ।
बृहत्पृष्ठं बार्हतं[11] तन्त्रं[12] द्वितीयꣳ हि स्थानमापन्नमिति[13] ।
उद्धरत्यन्तलक्षणानि—त्रिणवत्रय[14]स्त्रिꣳशयोरन्वपाये[15]मुत्सेधनिषेधौ परिस्वानमिति ।
20 जराबोधीयमहीनेषु चिकीर्षितम् ।
एतच्छन्दोमसामेति ।
तद्यदुष्णिहि राथन्तरात् स्तोमांच्छु[16]ध्यमविच्यावयिषीत् ।
उद्वꣳशीयं तैरश्च्यं वेति[17] विचारयन्ति ।
पूर्वस्याह्न उक्थान्त इत्यह्नो[18]द्वꣳशीयम् ।
25 उपक्रमणीयमहरिति तैरश्च्यम् ।
अषोडशिका रात्रिः स्तोमै[19]क्षात्रेणं[20], अषोडशिको[21] ह्येवायुर्भवतीति ।

---

1 ०ष्मतं K. 2 ०चौंव० G1, G2, J, K. 3 ०सोक्तः B. 4 अभिपर्यय० B; विपर्येतेर० G1; विपर्ययेतरे० G2. 5 ०स्वेवासु C, G1, G2, J, K. 6 स्वरसोनिः G1, G2, J; स्वरसोनिः K. 7 ०तामधृ० B. 8 ०तव्यो० B. 9 ०ऽते० G1, G2, J, K. 10 ज्यौति० G1, G2. 11 ०तत K. 12 तत्र B. 13 ०पन्ना इति. 14 त्रय is wanting in G1, G2, J, K. 15 ०पावायामु० B. 16 ०ध्या० B; सोमांबुध्यसवि० G1; सोमांच्छुध्यसवि० G2, J; ०मांछु० K. 17 विति J. 18 इत्यहो० G1, G2, J; इहो० K. 19 ०मं क्षा० B. 20 ०क्षात्रेण पो०. 21 ०कोऽस्रे० B, K.

" 'त्रिवृत्पञ्चदशोऽग्निष्टोमः ।' PB. 20. 13. 1.

उत्तरस्य पूर्व[1]मेकस्तोम[2]तामिवा[3]ह्नो दिदर्[4]शयिष[5]न्नायुषौ प्रच्यु[6]तं पञ्चदशं पूर्वस्मिन्नहन्यनुगृह्णाति ।

तत्र यदेतत् स 'रूक्षोऽभवत्' इति । PB. 24. 13. 2.

5 कपि[7]वनो भा[8]यजात्यश्वा[9]तूरात्राय जामदग्न्[10]ये दिदीक्षे[11] ।

ब्रह्मचारिणं सम्पन्नकुलीनमपः प्रहृत्य ।

तस्य त्रिवृतपञ्चदशमहरुपेतं बभूव ।

अथेतरस्तमर्थं साधयित्वा प्रत्याजगाम ।

सामायमि[12]ममहर्यागं निशी[13]शमतेति ।

10 आयुरतिरात्रमुपदधौ, ब्रह्मचारिणश्च परिहारेण यज्ञप्रत्यवहारेण[14] च[15] रूक्षो[16] बभूव ।

यस्त्वेतौ दोषौ परिहरेन्न रूक्षः स्यादिति ।" Caland PB. 20. 13. 4; cp. PB. 20. 13. 4, 5; ĀP. Ś. 22. 14. 20.

पू[17]र्वेणैव द्रव्यकल्पो व्याख्यातो व्याख्यातः ॥ ४ ॥

15 [18]द्वितीयः पटलः

अथातस्त्रिरात्राः ।

तत्र वामदेव्यं तृ[19]तीये पृष्ठे[20] करोति ।

लोकविधां त्रिरात्र उपक्रतः ।

एतानि लोके[21]सामानीति ।

20 तानि कुशलं यद्यथाभक्ति निदधाति ।

तन्त्रेषु विप्रतिपद्यन्ते ।

आहीनिकतन्त्राणीति गौतमः ।

तद्गायत्रीभिर्विजानीमः ।

एकैवात्राहीनिकी भवति ।

25 'अस्य प्रत्नाम्[22]' इति । SV. 2. 105; RV. 9. 54. 1.

---

1 पूर्वं एक० C, K. 2 ०स्तोता० G1, G2, J. 3 ०वान्यो B. 4 निर्दिशयि० K. 5 ०षः B. 6 प्रच्यु G1, G2, J, K. 7 कपवनो B. 8 भाव० B. 9 ०श्वात्तरा० G1, G2, J; ०श्वतराय K. 10 ०ग्न्यायय B. 11 ०क्षेद् B. 12 ०मिदह्र्योगाद B. 13 शी० B. 14 Wanting in G1, G2, J, K. 15 चारू० B; च न्नरुक्षदिति G1, G2; च न्नरूक्ष स्यादिति J, K. 16 G1, G2, J omit रूक्षो ... न्न. 17 पूर्वे J. 18 In B only. 19 द्वितीये B. 20 ०ष्ठ G1, G2, J; ०ष्ठं K. 21 लोके सा० C, G1, G2, J, K. 22 प्रत्ना B, C, G1, G2, J, K.

ता यत्करोति सहस्रवती सहस्रव[1]त्तदभिरूपेति ।
एकाहिकानीति धानञ्जय्यः ।
तद्गायत्रीभिरेव जानीमः ।
एकैवात्राहीनिकी भवति ।
5 "प्र सोमासो विपश्चितः" इति । SV. 1. 478; 2. 114; RV. 9. 33. 1; PB. 11. 3. 1.
यं[2]त् करोति[3] प्रवत्युपक्रमेऽभिरूपेति ।
अहरहं[4]रेवाहीनैकाहाभ्यां व[5]र्तत इति शाण्डिल्यायनः ।
एवं युक्ता एता गायत्र्यो भवन्ति[6] ।
10 अथ खल्वत्र भागविपर्ययो भवति ।
लोकविधां त्रिरात्र उपकृतः ।
तं यथाभक्त्यचिकीर्षीत्[7] ।
ते एते परेऽहनि भागविपर्यया[8]द् द्रव्यसमा[9]सेन व[10]र्तते ।
द्वितीयेऽ[11]हनि स्थां[12]नस्थानि द्वैतीय[13]कानि, भागान्वितानि तार्तीयि[14]कानि ।
15 एतदेव विपरीतम् ।
तृतीये[15] खल्वत्र द्वयान्यक्षररूपाणि क्रियन्ते ।
प्रजापतेश्च वागक्षराण्य[16]क्षराक्षराणि च ।
आज्यादिषु प्रजापतेर्वागक्षराणि, यथोपलम्भमहस्स्व[17]क्षराक्षराणि ।
एकाक्षरणिधनं यौधाजयम् ।
20 एष आचार्यसमयः ।
अथाप्याह—"यदाक्ष[18]राणि प्रथममहर्भजन्त" इति । PB. 21. 5. 4.
व्याख्याता अर्काः, तथाज्यदोहानि ।" cp. PB. 21. 5. 5.
पूर्वावर्कौ व्यत्यस्यति[19] ।
अक्षरणिधनं प्रथमेऽहनि चिं[20]कीर्षन्नाज्यदोहानां प्रथमं तृतीये ।
25 एवमिव ब्राह्मणं भवति—अथाप्येषामेतत् त्रिणिधनं तृतीयेऽभिरूपम् ।

---

1 सहस्रदत्तावभि० B; सहवत्तावभि० G1, G2, J, K. 2 C, G1, G2, J add तां. 3 सहस्रवती सहत्तावभि० G1, G2; सहस्रवती स( ०हस्र K )धत्तावभि० J, K. 4 अहरेकाहीनैकाहाभ्यां G1, G2, J; अहरहरेकाहीनैका० K. 5 पर्वत G1, G2, J, K. 6 ०न्तीति C, G1, G2, J, K. 7 ०र्षन् B. 8 ०या B, G1, G2, J, K. 9 द्रवासमासे G1, G2, J. 10 वर्त्तते K. 11 ०हस्था C, G1, G2, J, K. 12 स्थानिस्था० G1, G2, J, K. 13 द्वि० K. 14 तार्तीयानि G1, G2, J, K. 15 ०ये मथ ख० K. 16 वागक्षराक्षराणि C; वागक्षरा G1; वागक्षराक्षरा G2, K. 17 ०मह:स्वक्षण्येका० G1, G2; ०महस्वक्षण्येका० J; ०मह:स्वक्षरा अक्षव्येक्ष० K. 18 ०क्षाराणि C. 19 ०स्य ह्यक्ष० C. 20 ०कीर्षि० J, K.

अनुष्टुभि प्रथमस्य करोति।[1]
अत्रैव सन्ताना[1]र्थानि भवन्ति[2]।
सन्ताना[3]र्थमिदं भवति।
द्व्यक्षरणिधनत्वादनुच्छन्दसम्।
5 इतरयोरैडमन्त्यं करोति।
इडानुग्रहार्थं[4] बृहतीं[5] वा स्वेन सामान्ते[6]नापिपादयिषीत्[7] ॥ ५ ॥
उपवती[8] द्वितीयस्य प्रतिपन्न[9]वमात् स्तोमा[10]न्विता।
'कया ते अग्ने अङ्गिरः[11]' [12]इति होतुराज्यम्। SV. 2. 899; RV. 8. 84. 4.
केति तृतीयामिति हि भवति[13]।
10 अथाप्या[14]ह—"यत् सामा स्तोमो भवति तदाज्येषु। निराह" इति। PB. 11. 2. 1, 2.
ता[15] एताः[16] कवत्यो[17] यथा वामदेव्यस्यर्चो[18] दाशरात्रिकाण्युत्तराणि सन्तनीति[19]।
स्वयोनीति[20] होतृकपृष्ठान्येतानि।
छन्दोमत्र्यहे प्रायश्चित्ता[21]र्थं गायत्रपार्श्वं[22] मैत्रावरुणसाम।
15 एतद् वामदेव्यं[23] सदशम्।
तत् खलु बृहतीषु करोति[24] त्रिस्थानां[25] बृहतीं पृष्ठेषु चिकीर्षन्।
अथाप्यस्मिन्न[26]क्षराक्षरं भवति।
ककारषकारादिरकारः सन्तनि ब्रह्मसाम।
'अस्तावि मन्म पूर्व्यम्' इति। SV. 2. 1027; RV. 8. 52. 9.
20 एता ब्रह्मप्रवादा इति।
संकृत्यं[27]च्छावाकसाम नवमाद् भागान्वितम्।
अथ खल्वत्रा[28]जामि भवति।
लोकविधां त्रिरात्र उपकृतः[29]।
सम्भिन्नमाभ्यां लोकाभ्यामन्तरिक्षमिति।

---

1 अनु प्र० C, K. 2 C omits सन्ताना० भवन्ति. 3 ०र्थानिदं G1, G2, J, K. 4 ०ग्रहो C; ०ग्रहोय G1, G2, J, K. 5 जगतीं C, G1, G2, J, K. 6 ०न्ते तेना० G1, G2, J. 7 ०षत् B. 8 उपपदी B. 9 ०न्नस्य च पाद् G1, G2; ०न्नस्य वमाद् K. 10 भागान्विता C, G1, G2, J, K. 11 ०रसः C, G1, G2, J. 12 Wanting in G1, G2. 13 ०तीति C, G1, G2, J, K. 14 अथा प्रा० G1, G2, J, K. 15 Wanting in G1, G2, J. 16 ताः G1, G2, J, K. 17 आपत्यो B. 18 ०व्यर्चो C, G1, G2, J. 19 ०नोति B. 20 ऽस्वायानीति G1, G2, J. 21 ०त्रार्थे C. 22 ०पार्श्व G1, G2, J. 23 ०व्यं स० B. 24 करोतीति B. 25 त्रिस्यानां C. 26 ०न्नवाक्ष० C. 27 सन्तन्यच्छा० C. 28 ०त्र जा० C, G2, J; खलुत्र० G1. 29 उपा० G1, G2, J.

पाञ्चमिकीं ककुभं करोति ।
तस्यां[1]मक्षरात्तरं भवति ।
ककारषकारादिरकारः पिपीलिकामध्यां करोति ।
वागुक्तोऽयं त्रिरात्रः ।
5 तत्रोभावाकारा[2]वनुष्टुभामचिकीर्षीत् ।
नावमिकीरुत्तराः ।
अत्तरसमासो हि तार्तीयिकेषु[3] ।
तासां मध्यमामुद्धरति ।
दशरात्रलिङ्गेति ।
10 तत्रैतां करोति ।
'तꣳ सखायः पुरूरुचम्' इति । SV. 2. 1030; RV. 9. 18. 12.
एषा सखिमती यथा वामदेवस्यर्चः ।
ता यदावर्तयति परिवत्या प्रक्रमं परिजिहीर्षन् ।
नानाग्निष्टोमसामानि ।
15 ना[4]नात्वावृत्तार्थो नानाछन्दः[5] ।
स्वावृत्तेष्वेवं भू[6]यो नानात्वमिति ।
स यदिहानुष्टुभं[7] करोति ।
बृहतीः कृत्वानुष्टुभा वेलेति[8] ।
तत्रैतद् विशोविशीयꣳ स्वयोन्यापन्नं पुरस्तादेतत् स्थानम् ।
20 वा[9]क्प्रवादोऽत्र भवति ।
भागान्वितान्युकथानि ।
'होता देवो अमर्त्यः' इति । SV. 2. 827; RV. 3. 27. 7; 8. 19. 24.
तृतीयस्य होतुराज्यम्[10], हो इति तृतीयमिति हि भवतीति ।
गो[11]षूक्तं प्रायश्चित्तिसाम ।
25 एतस्मिन्नत्तरात्तरं भवति ।
रेफादिरकारः सतोबृहतीं करोति ।
त्रिपदा त्रिरात्रेऽभिरूपेति ।
सत्रासाहीयं मैत्रावरुणसाम ।
एतद् वामदेव्यसदृशम् ।

1 एतस्यामक्षरं C, J, K; एतस्यमक्षरं G1, G2. 2 ०राऽनु० C; ०रानु० G1, G2, J, K. 3 ०कीषु C, G1, G2, J, K. 4 नानात्वार्थो C, K. 5 सावृ० B. 6 ०भूतो B. 7 ०भः C, G1, G2, J, K. 8 चो भवति Cक. 9 चार्क० B. 10 G1, G2, J repeat it. 11 गौ० B, K.

पुरस्तादेतत्[1] स्तोभं बहिःस्वारम् ।
यथा वामदेव्यम् ।
वारवन्तीयमग्निष्टोमसाम ।
एतद् गायत्रीसामापन्नं पुरस्तादेतत् स्थानम् ।
5 वाक्प्रवादोऽत्र[2] भवति ।
वागुक्तोऽयं[3] त्रिरात्रः[4] ।
अपि वानुष्टुभोपपत्त्या[5] वाक्प्रवादेनानुग्रहो भविष्यतीति ।
अक्षरविक्रमेऽयं[6] त्रिरात्रः ।
अपि वानुष्टुभोपपत्त्यादक्षरप्रवादेनानुग्रहो भविष्यतीति ।
10 विद्वानविद्वानिति तु भवति[7] ।
नानासाधुरयं त्रिरात्रः ।
तत्र नार्त्विजोऽचिकीर्षेत्[8] ।
कथमविद्वानृत्विक् स्यादिति त्वेवैतत् सदस्यानेव प्रतिग्राहकान् कुरुत इति ॥ ६ ॥
15 राजयज्ञ उत्तरः ।
तस्य यदेवंविधोऽहर्योगः ।
एतान्यन्ताहानि[10], अन्तो हि राजेति ।
महानाम्नीर्मध्यमस्याह्नः[11] पृष्ठं करोति ।
सर्वच्छन्दस्यासते[12] ।
20 सर्वपशूनामालम्भो[13] भविष्यतीति ।
अथाप्येता वज्रोक्ता राजयज्ञेऽभिरूपाः, वज्री हि राजेति ।
कथं धर्मा इति ।
कर्तव्या इत्येके[14] ।
[15]ते चैव करणवर्णा ये वज्रे ।
25 अपि चेह स्वस्थानतराः पृष्ठं च हि भवन्ति ।
अहीने च ।
अथापि बह्विदमिहाशान्तं क्रियते ।
सर्वपशूनामालम्भोऽप्यभिमेथिकाः[16] पृष्ठविलोपः ।

1 अपु० C; उपुर G1, G2, K; उत्पुर J. 2 ०दो G1, G2, J. 3 ०क्तो० G1, G2. 4 ०त्रे G1, G2, J. 5 ०पयत्या B; पथत्या G1, G2, J, K. 6 ०मो० B. 7 ०न्ति C. 8 ०र्षेत् B. 9 ०स्था० B. 10 ०भ्यन्तरानि G1, G2; ०न्यन्तो० K. 11 ०म्नि G1, G2, J, K. 12 ०न्दस्त्याशु C; ०न्दःस्याशु G1, G2, J; ०न्दस्याशु K. 13 C adds न. 14 ०त्येते C. 15 C, G1, G2, J, K add तत्र. 16 ०मेधिकाः B; ०मेथिकां G1, G2; ०मैथिकां J.

तत्रापः शान्त्यर्थाः, ते क्रियमाणा बृहद्रथन्तरयोर्धर्मान् कारयेयुरिति।[1]
अथापि संयुक्तधर्मा इति।
अथ बृहद्रथन्तरयोर्धर्मान्[2] कुर्युः।
[महानाम्नीबलात्[3]तु नूनम्।][4]
5 महानाम्नीनां[5] धर्माः क्रियेरन्निति।
अकर्तव्या[6] इत्यपरम्।
तत्र[7] ते[8] चैवाकरणवर्णा ये वज्रे[9]।
अपि च यः स्वाध्यायधर्मान्[10] प्रतीयात्[11] कृत्स्नान् प्रत्येतुमर्हतीति[12]।
तेऽवेलायां[13] नोर्ध्वं[14] माध्यन्दिनीन् महानाम्नीभिः स्तुवीरन्।
10 एका[15] वा द्वौ वा सम्प्रगायेतां नेतरे[16] शृणुयुरिति।
एतान्येवमकुर्वतो[17] निर्वचनं[18] स्वाध्यायधर्मः।
अथापि यो बृहद्रथन्तरयोर्महानाम्नीकारितान् धर्मान् मन्येत भूयश्चा-[19]
ल्पीयसेऽनुसंहरेत् प्रत्यक्षे च परोक्षायां[20]नुचर्य्यं गमयेदिति।
अतस्तत्पापीयो[21] बृहद्[22]रथन्तरधर्मान[23]कृत्वा महानाम्नीनां धर्मान् कर्त्तव्यान् मन्येत।
15
समानो[24]त्पादाना[25]ं समानविधानानां सतां[26] य एकान्[27] कुर्यात्।
एकान् न किं सोऽत ऊर्ध्वं न[28] व्याहन्यात्[29]।
व्याख्याता अनुष्टुभः प्रतिपदश्चतुष्टोमे[30]।
ताभिः प्रच्युं[31]तामुपवर्तीं द्वितीयेऽहनि प्रतिपदं करोति।
20 ऋविमन्तं प्रथमात् प्रच्युतं तृतीयेऽहन्यनुगृह्णाति।
वामदेव्यं महानाम्नीभिः प्रच्युतं स्वे स्थानेऽनुगृह्णाति।
पार्थुरश्मं ब्रह्म[32]साम।
पङ्क्तिप्रतिप्रयोजना महानाम्न्यः।

1 ०र्थां G1, G2, J, K. 2 ०र्द्धमर्नि G1, G2; र्द्धर्मान्ना J. 3 ०लात्तु C, G1, G2, J, K. 4 Wanting in B. 5 ०म्नीनों G1, G2, J. 6 ०व्य G1, G2 7 Wanting in G1, G2, J. 8 Wanting in B. 9 म्रे G1, G2; ज्रे J, K. 10 ०ध्यायमतिवायाकृ० G1; ०ध्यायधर्मा तवायाकृ० G2; ०ध्यायधर्मातवयाकृ० J, K. 11 प्रतिपदं B. 12 ०र्हति B. 13 ते वे० C. 14 नोर्धस्तन्मा० C; नोस्ते मध्य० G1, G2, J, K. 15 एका B. 16 इतरे G1; रेतरे G2, J. 17 ०वन्तो C, G1, G2, J, K. 18 ०नः स्वा० G1, G2, J, K. 19 भूयसश्च० B. 20 या is wanting in G1, G2, J; ०क्षया० K. 21 C, G1, G2, J add यो. 22 बृहद् is wanting in G1, G2. 23 ०नु कृत्वा B. 24 सामान्यो० G1, G2, J, K. 25 ०त्पादनं० G1, G2; त्पदानां० J. 26 सतान् G1, G2, J. 27 एतान् B. 28 म० C. 29 न्याह C, G1, G2, J, K. 30 ०मैता० C, G1, G2, J. 31 प्रस्तुता० G1, J. 32 बृहत्साम B.

एतत् पाङ्क्तं क्षत्रसाम, अथकारणिधनम् ।
ताभ्यां प्रच्युते सन्तनिनी माध्यन्दिनेऽनुगृह्णाति ।
आशीःसा[1]मनी मा[2] प्रच्यो[3]षातामिति ॥ ७ ॥

अथैतस्य पतन्तकस्य प्रथमेऽहनि वैष्णवीष्वनुष्टुप्सु पावमानीषु[4] बहिष्प-
5 वमानं[5] कल्पयेदित्येक आहुः ।
एतत् प्रकृतौ दृष्टं भवतीति[6] ।
नैतदयुं[7]क्षु स्तोमेषूपपद्यत इत्यपरम् ।
एतस्मिन्नेव बहिष्पवमाने गायत्रीः पावमानीरावपेत् ।
एतद्धि[8] हार्विष्कृतं[9] भवतीति[10] ।
10 चतुष्टोमकारितास्ता भवन्तीत्यपरम् ।
गायत्रीष्वेव कल्पयेदिति ।
अथ खल्वाह—एते एव पूर्वे अहनी इति ।
तत्रैके पातन्तके प्रतियन्ति ।
एतं विधाय प्रदेशो भवतीति ।
15 प्रकृत्यपश्रया विकारा भवन्तीत्यपरम् ।
प्राकृतस्यै[11]वाश्वमेधस्य प्रतीयादिति ।
अथापि ते नानास्तोमाः ।
एकस्तोमोऽयं[12] भवति ।
तत्र स्वतन्त्रा एकाहाः स्युरित्येके ।
20 बहुधै[13]काह्नानां स्वातन्त्र्यं दृश्यते ।
यथा—आयुष्कामे षड्रात्रे[14]नवरात्रयोरिति ।
त्रि[15]रात्रतन्त्रा इत्यपरम् ।
एवं च तन्त्राविलोपः । ʹcp. LŚ. 9. 11. 13.
अपि चैषोऽहीनन्याय इति ।
25 अषोडशिके[16] गोआयुषी इत्यपरम् ।
एवं दृ[17]ष्टे च, अपि चैवं प्रदेशो भवतीति ।
अथैष वैदत्रिरात्रः[18] ।

1 ०सामनि B; ०सामानी C. 2 वा G1, G2, J, K. 3 प्रक्योयोन्द्रता० B; प्रत्येपाता० C. 4 ०नीभिर्बर्हिषु B. 5 ०मानिनं G1, G2, J. 6 ०वती B. 7 ०दस्नुक्षुः C; ०दयुक्षुः G1, G2, J. 8 ०दिशा G1, G2, J, K. 9 हाधिकृतं G1, G2, J. 10 ०वति K. 11 ०स्यैवमे प्र० G1, G2, J; ०स्यैवामे० K. 12 ०मो यन् भ० C, G1, G2, J; ०मो यद् भ० K. 13 बहुष्वेका० B. 14 ०त्रे न० C, G1, G2, J, K. 15 त्रि is wanting in G1, G2, J, K. 16 ०को B. 17 मद्धे B. 18 ०त्रस्य त्रि० G1, G2, J.

तस्य त्रिवृत्स्तोमाः स्युः ।
षोडशिन उत्तमस्यातिरात्रस्य षोडशं प्रथमꣳ रात्रिषाम ।
एवं तावत् स्तोत्रीयो[1] यथा त्रिरात्रः ।
नाना षोडशसामानि[2] नानात्वार्थः[3] ।
5 नानदं प्रथमः ।
उद्वꣳशीयं द्वितीयः ।
एतदानुष्टुभꣳ हरिवद्योनि, यथा गौरीवितम् ।
तस्य स्थाने तैरश्च्यम् ।
एतत् पूर्वाभ्याꣳ सप्रायं न्याय्य[4] उत्तमे षोडशिं[5] ।
10 अथैत उत्तर एतान्[6] कामान्नभ्युपकृताः ।
यथैतद् ब्राह्मणम् ।
स्तोमकारित आवापः ।
अन्तर्वसावप्रत्यवरूढानि उत्तमस्याह्न उक्थानि[7] ।
लोकविधां त्रिरात्र उपकृतो रोहोपकारः ।
15 अथाप्येवमव्याहतꣳ सवनमिति ।
न्यायक्लृप्त उत्तरो न्यायक्लृप्त उत्तरः ॥ ८ ॥

तृतीयः पटलः[8]

"अथैष चतुर्वीरो बृहद्रथन्तरपृष्ठ एव ।
न हि षाडहिकान्यनुभवन्ति ।
20 नान्यो[9] व्यलुलुप्सीत् ।" Ārṣ. K. V. 74 b.
ते यन्नानाच्छन्दस्सु ब्राह्मणेनैव तद् व्याख्यातम् ।
कानि तन्त्राणीति ।
चतुरहतन्त्राणीति[10] गौतमः ।
तद् विजानीमः ।
25 चतुर्थेऽहनि चतुर्थप्रतिपदमादिश्यैकाहतन्त्राद्[11]द्वात्रिमुपजिगमिषन्नस्य प्रज्ञां करोतीति ।

त्रीण्यहीनिकानि ।
एकमैकाहिकमिति[12] धानञ्जय्यः ।
एवं एवंणाहीनस्यादानम्[13][14] ।

1 स्तोमो C; ०या G1, G2, J, K. 2 ०शि० K. 3 नात्वा० G1, G2, J, K. 4 न्याय्यत B. 5 ०शस्य B. 6 एतां C. 7 उक्तलो० B. 8 In B only. 9 नो B, K; नानो G1, G2, J. 10 Wanting in G1, G2, J. 11 ०शैका० C, G1, G2, J, K. 12 ०मेकैका० G1, G2, J. 13 प्रवणा० G1, G2, J. 14 ०दनन्तम् B.

एकाहतन्त्राद्[1] रात्रेरुपायः ।
स यदे[2]तदनन्ततन्त्रतरं स्तोमकारित आवापः ।
उद्धरति जनुषैकर्चौ स्तोमकल्पार्थः ।
तत्र ज्योतिष्टोमौ[3] करोति ।
5 तयोः स्थाने नाना[4]पवमानिकेभ्यो नानात्वार्थः ।
अथ यत्रा[5]यमर्थो भवति साप्तमिकीं तत्र ककुभं करोतीति[6] ।
असञ्चाराय तत्र खलु पदैं[7]स्तोभान् करोति ।
चतुरोऽयं[8] वीरानुपकृतः ।
त एते चत्वारः समानयोनयः समानार्षेयाः पुन्नामधेया गणेडा
10 गणनिधनाः ।
अपि वा चातुर्वि[9]ध्यादेव क्रियेरन् ।
तांस्तु यदेवं प्रयुं[10]क्ते, एवमिडा[11]न्तो रोहः ।
अपि चैवं दाशरात्रिको[12]ऽवसाने[13] भवतीति ।
तान् खल्वन्त्यान् करोति ।
15 अत्रैषां स्व[14]च्छन्द इति ।
तत्[15] कुशलं[16] यन्नित्यासु ।
'धर्त्ता[17] दिवः' इति । SV. 1. 558; 2. 578; RV. 9. 76. 1; PB. 14. 9. 4.
उत्तम एतासु स्वयोनिः ।
20 अथाप्येता अन्तलक्षणैः सम्पन्ना इति ।
व्याख्याता अर्काः ।
तेषां [18]तदेवानुपूर्व्यं यत् त्रिरात्रे गोषू[19]क्तं प्रायश्चित्तिसामे[20] ।
पदस्तोभवा[21]धितमर्कं द्विपदास्वनुगृह्णाति ।
तेन प्रच्युतं वारवन्तीयमुष्णिह्यन्तसाम मा प्रच्योष्टेति विपरिहरति ।
25 आनुष्टुभेऽजाम्यर्थः ।
एतेनैवोत्तरे व्याख्याताः ।
उद्धरति पदस्तोभान् ।
न ह्येते चतुरो वीरानुपाकृताः ।

---

**1** ०न्त्राया त्रे० G1, G2, J. **2** यदेतदेतत्तन्त्रान्तरं C; यदेतदन्तम्रतरं G1, G2, J, K. **3** ०म्यौ C, G1, G2. **4** नावमिक्यौ C, G1, G2, J, K. **5** यत्र षडहो० C, G1, G2, J, K. **6** ०रोति C, G1, G2, J, K. **7** पाद० B. **8** B adds चतुरो. **9** ०विंदध्या० K. **10** प्रयत्ना B. **11** ०डातो C, G1, G2, J, K. **12** ०त्रिकौव० G1, G2, J, K. **13** ०सानो C. **14** स्वं छन्द C; स्वंद G1, G2, J. **15** तान् C, G1, G2, J, K. **16** ०लत्वं B. **17** धर्मा B. **18** यतदे० G1, G2, J. यत्तदे० K. **19** गौ० K. **20** ०सामाः G1, G2, J, K. **21** ०वाधम० C, G1, G2, J, K.

तत्र कुशलं यन्नित्यादि[1]पदस्तोभापायादर्कः स्वꣳ स्थानꣳ समापद्यते ।
तस्यानुसमाप्ति[2]ꣳ श्रुध्यवारवन्तीये समापद्येते[3] ।
अतो यो द्रव्यविकारः स्तोम[4]कारितः स भवति ॥ ९ ॥

अथ खल्वाह—"वसिष्ठस्य जनित्रे भवतः" इति । PB. 19. 3. 8; 21. 11. 3; LŚ. 9. 12. 8.

5 कस्येदं ब्राह्मणꣳ स्या[5]दिति ।
बृहद्रथन्तर[यो[6]रविप्र]योगस्येत्याहुः, एते[7] हि विश्वोवसीयसी आजनित्रे भवत इति ।

अपि वा रथन्तरस्यैव द्वियोगस्यैतद्धि वासिष्ठमिति ।
10 अपि वा रथन्तर[8]स्यैव भवतश्च वासिष्ठस्य, एते[9] वासिष्ठे भवत इति ।
जनित्रे ए[10]वानुकल्पयेदिति कौत्सः[11] ।
जनित्रे भवत इति सति किमन्यदनुकल्पनात् ।
न त्वेवानुकल्पयेत् ।
न ह्येते आनवकाश्यान्ननुकल्पयतीति ।
15 एतेषा[12]मेव विचाराणामेकस्यैतद् ब्राह्मणꣳ स्यात् ।
ए[13]कस्तोमतामिवाह्नां[14] दिदर्शयिषन्नुत्तमे भागस्तोमान् करोति, एते प्राप्ति[15]-स्थाना इति ।

पञ्चरात्रस्य चतूरात्रेणैव पृष्ठवादो व्याख्यातः ।
ते खलु स्वासु[16] करोति ।
20 न ह्ययं चतुरो वीसंनु[17]पकृतः ।
अथापि नानाभागश्चतूरात्रः ।
अ[18]थेह समानभागे चतुर्थपञ्चम इति ।
कानि तन्त्राणीति ।
पञ्चा[19]हतन्त्रा[20]णीति गौतमः ।
25 तच्चतूरात्रेणैव व्याख्यातम् ।
चत्वार्याहीनिकानि ।

1 ०वि० G1, G2, J, K. 2 ०मापत्ति० G1, G2, J, K. 3 ०द्यते B, G1. 4 स्तोभ० C; ०स्तोमविकारः K. 5 J omits स्यादिति ··· वा रथन्तर ( line 10 ). 6 योरविप्र is wanting in B. 7 ०रेके B. 8 ०स्य हवत० C; ०स्यये हवत० G1, G2, J; ०स्य चेहवत० K. 9 एके B. 10 वा० B. 11 ०त्सौ G1, G2, J. 12 ०षां त्वेव C, G1, G2, J, K. 13 एवस्तो० G1, G2. 14 ०वह्नां G1, G2, J. 15 प्राप्त० C, G1, G2, J, K. 16 यः सवनसाधु B. 17 ०नुकृतः C. 18 येह G1, G2, J, K. 19 ०श्चमाह० K. 20 G1, G2, J add तं after ०ह.

एक[1]मैकाहिकमिति धानञ्जय्यः ।
तत्तेनैव व्याख्यातम् ।
अग्निष्टोमः प्रथममहरुक्थानि मध्[2]यः ।
दशरात्रन्यायेन यत्र सँस्थाभि[3]प्रयुज्यते, एषो[4]ऽभिप्रयुज्यते ।
5 उद्धरति षोडशि[5]नं चतुर्थात् ।
"वि[6]राजमन्वपायँ स्वराजोपेयुः ।" Ārs. K. V. 112 b.
[7]स्तोमस्य वा लो[8]पात् ।
अथाप्येनमतिरात्रे करिष्यन् भवति ।
त[9]न्न [10]समविचारयिषीत् ।
10 उद्धरति आर्तीषादीयं धर्मिणि, तत् पुरा षडहे धर्मि भवति ।
तत्र याथान्तर्यात् क्रोशं प्रत्याहरति ।
अपि वा श्रुध्येन प्रच्युतमिहानुगृह्णाति ।
तदु भवत्यूर्ध्वेडं बार्हतेऽहनीति ।
स्तोमकारित आवापः ।
15 एतेनैवोत्तरो व्याख्यातः।
स्तोमकारित उद्धा[11]रः ।
सप्तद[12]शस्तोमं षोडशिनं[13] करोति ।
यो वा ह्यह्नः स्तोमः स षोडशिनो न्यायेन ।
यो वा[ह्नि[14] भक्तिरेवमुत्पन्नो हि भवति ।
20 अथाप्यनादिष्टव्यूहेन भवति ।
अथ कथमहीनाह्नो रात्रेरितीति । ]
ह्रसीयानित्य[15]ह्नः स्तोमं चै[16]नमनुयन्तं पश्यामः ।
अथाप्याह—सप्तदशँ स्तोमा नातियन्तीति[17] ।
व्रताप्तिमु[18]त्तरं उप[19]क्रुतः ।
25 स खल्वेका[20]हक्लृप्तः ।
ते व्याख्याताः ॥ १० ॥

1 एवकामैका० G1, G2; एव कमैका० J, K. 2 मध्ये C, G1, G2, J, K, 3 ०स्थाहि प्र० B; ०स्थानि प्र० G1, G2, J, K. 4 एताहि प्र० B. 5 ०नश्च० B. 6 विराजाम० C, G1, G2, J, K. 7 सोम० K. 8 लोभात् C, G1, G2, J. 9 तत्त G1, G2, J; wanting in K. 10 समवैवि० C, G1, G2, J, K. 11 उच्चारः G1, G2; उर J. 12 ०शं C; स्तोमं is wanting in C, G1, G2, J, K. 13 ०शिकं B. 14 B omits ह्नि… रात्रेरितीति ( line 21 ). 15 ०त्यहः C, G1, G2. J, K. 16 स्वे तम० C. 17 ०न्ती C, G1, G2, J. 18 ०रमुप० C. 19 ०हृतः G1, G2, J, K. 20 खल्वेकाहा क्लृप्ताः C.

"ऋतुषडहे कथꣳ रात्रिरिति ।" Ārṣ. K. V. 111 a.
अकर्त्तव्येति शौचिवृक्षिः ।
एवमुत्पन्नो हि भवति ।
अथाप्य[1]नादिष्टा व्यू[2]हेन भवति ।
5 अथापि कथमहीना[3]ह्नो रात्रेरुपायो[4] भविष्यतीति ।
अथापि कृत्स्नतायै वै नूनमिह रात्रिः क्रियेत, कृत्स्नोऽयꣳ षडह इति ।
अथाप्येष चतुर्थो भागो रात्रेः[5] प्रत्य[6]र्द्धितामत्यक्रमिष्यदिति ।
"कर्तव्येति गौतमः ।" ibid.
आदिष्टा कल्पेन भवति ।
10 अथाप्येषाहीनं[7]सꣳस्था यां[8] रा[9]त्रिस्तामवसानभूतां षष्ठमहरागच्छतीति ।
अथाप्येषोऽहीनन्यायः ।
सर्वे[10]ऽतिरात्रमन्तः ।
अथाप्य[11]तिरात्रिकं व्रतम् ।
तस्यान्ते निपाताद् रात्रिमुपधीयमानां पश्यामः ।
15 यथा सप्तरात्रेषु ।
अथापि यः पृष्ठ्यावलम्ब[12]स्य पञ्चमाद[13]धिदेशाद् रात्रि[14]मपनयेत्, अर्थापायाद्रात्र्यपायाच्च स्तोमप्रत्यवरोह[15]म्, इह[16]ापि सोऽर्थागमाद्रात्रिं प्रत्येतुमर्हतीति ।
यद्धेतदेवमुत्पन्न इति, अन्त[17]तो वै[18] तत्र भवति, अन्तदर्शना रात्रिरिति ।
20 यद्धेतदनादि[19]ष्टा व्यूहेनेति, नित्यत्वान्नूनमेनानादिशतीति ।
यद्धेतत् कथमहीनाह्न इति, कथं वाऽप्यतिरात्रिकोऽभविष्यदिति, पश्यामश्चाहीनिके[20]भ्यस्तन्त्रेभ्यो रात्रेरुपायम्, यथा त्रिरात्रेषु ।
यद्धेतत् कृत्स्नोऽयꣳ षडह इति, कृत्स्नो ह्येवं[21] षडहः रात्र्या तु कृत्स्नत[22]रो भविष्यतीति ।

---

1 ०प्यन्वादि० B; ०प्यानादि० G1, G2, J. 2 व्यूहेतरार्थान् B. 3 ०नामह्नो० B. 4 ०योऽभविष्यदिति C. 5 रात्रेः ( रात्रिः G1, G2, J ) कृत्ये तत् कृत्स्नोऽयं षडह इति अथाप्येष चतुर्थो भागो रात्रेः प्र० C, G1, G2, J. 6 ०त्यध्यता० B. 7 ०ने स० G1, G2, J. 8 यद् C, G1, G2, J, K. 9 स्तोमवसानगतां B. 10 सर्वे ते रात्रिमतः C; सर्वे ते रात्रियंतः G1, G2; सर्वे ते रात्रियंता J; सर्वे ते रात्रि० K. 11 ०प्य( प्या J )रात्रिकं C, G1, G2, J, K. 12 ०लम्बनस्य C. 13 ०मादनादे० C, G1, G2, J, K. 14 ०मुप० C. 15 ०रोहः C. 16 अपि C. 17 अनन्ते C, G1, G2, J, K. 18 Wanting in G1, G2. 19 ०ष्टव्यू० C, G1, G2, J. 20 ०निकल्पस्तन्त्रे० G1, G2, J, K. 21 दैव G1, G2, J, K. 22 ०तारा G1, G2, J, K.

यद्वेतद[1]क्रमिष्यदिति, अग्रं[2] एवातिक्रान्तो भवति ।
अति[3]क्रामन्तं च पश्यामः ।
यथासोर्यमे गौरीवितापायात् पृथक्[4] स्वारा[5]णि [ स्तोत्राणि ][6] करोति नानासाधु[7]रँहीन इति ।
5 स यदेतान्येतानि रूपसम्पन्नानीति ॥ ११ ॥

आयुष्का[8]मयज्ञ उत्तरः ।
तत्र त्र्यहौ समस्य नि[9]दधातीति ।
अहीनत्र्यहं चैकाहत्र्यहं च ।
कस्य हेतोरिति ।
10 "त्रयः प्राणापानव्यानाः" इति । PB. 22. 2. 3.
अग्निष्टोमसंस्थं ज्योतिषम् ।
एषास्य प्राकृती संस्था ।
अथाप्येतया संस्थया चरति ।
अथापि नानात्वयाविमौ त्र्यहौ, ता[10]वुपक्रमसंस्थया प्राचिक्रमिषीत्[11] ।
15 अषोडशिका रात्रिः स्तोमज्ञात्रेण, अषोडशिको ह्येवायुर्भवतीति ।
द्वितीयस्याह्नो [ [12]वासिष्ठं माध्यन्दिनान्त्यं स्यादिति शाण्डिल्यः ।
षष्ठार्थेनेदं पुरा प्रच्यवते नेह षष्ठार्थ इति ।
पार्थमेवेति गौतमः ।
एतत् समूहसाम, समूढावच्छेदोऽयं भवतीति ।
20 तृतीयस्यानुष्टुभि ] बृहत् करोति ।
त्र्यहे सर्वं[13] बृहद्रथन्तरे युयुत्समाणः ।
अजास्यर्थं वैवं[14] स्यात् ।
पृष्ठ्यावलम्ब उत्तरः ।
तस्य पञ्चाहो बृहद्रथन्तरपृष्ठ एव ।
25 विश्वजिति हि पृष्ठानि करिष्यन् भवति ।
उद्धरति षोडशिनं चतुर्थात् ।
तत् पञ्चरात्रेणैव व्याख्यातम् ।
त्रयस्त्रिंशानि पञ्चमस्याह्न उक्थानि ।

---

1 ०दत्यक्र० G1, G2, K. 2 ०ग्रह G1, G2, J, K. 3 अभिक्रा० B, C. 4 पृष्ठयस्वा० K. 5 ०राक् G1, G2, J. 6 B, K omit it. 7 ०धुरहित G1, G2, J. 8 ०ष्कामानां B. 9 G1, G2, J, K have निति for निदधाति ··· इति ( line 7 ). 10 तानुप० C, G1, G2, J, K. 11 ०मयि० B; ०क्रमेयपीत्० G1, G2, J, K. 12 वासिष्ठं ··· ०नुष्टुभि (line 20) wanting in B. 13 समं C, G1, G2, J, K. 14 चैव C.

रात्रिकारितो हि स्तोमप्रत्यवरोहः ।
तान् विश्वजिति करिष्यन् भवति भवति ॥ १२ ॥

चतुर्थः[1] पटलः

अथातः सप्तरात्राः ।
5 तत्र पृष्ठ्यं व्रतं सप्तमं करोति[2] ।
एतदकृतं[3][4] पृष्ठं भवति ।
अथाप्यनङ्गमेतद्[5] व्रतस्य[6] यदुक्थानि ।
तत्र ज्यौतिष्टोमानि[7] स्वस्तोमान्याहरति, षोडशिमती[8] रात्रिरहीनन्यायेन ।
अथाप्यनङ्गमेतद्[9] व्रतस्य यद्रात्रिः ।
10 तत्र यैवं[10] कृत्स्नतमा रात्रिस्तोमाहरतीति[11] ।
सप्तदशमुत्तरस्य [ व्रतम्[12] ।
स्तोमकारित उद्धारः ।
तस्य स्तोमान्वयीत्युक्थानीति ।
किंस्तोमानि स्युरिति ।
15 एकविंशस्तोमानीति गौतमः ।
एष[13] एषां प्रकृतिस्तोमो[14] भवति, तमन्वियुरित्येतत्स्यात्[15] ।
सप्तदशस्तोमानीति धानञ्जय्यः ।
एषोऽस्य[16] व्रतस्य स्तोमो भवति, तमन्वियुरित्येतत्स्यात् ।
पञ्चविंशस्तोमानीति ] शौचिवृक्षिः ।[17]
20 एष व्रतस्य प्रकृतिस्तोमो भवति, तमन्वियुरित्येतत् स्यात् ।
अथाप्येवं तासां स्तोत्रीयाणामनुग्रहो भवति यां[18] पञ्चविंशाद् व्रतात् सप्तदशे क्रियमाणेऽपयन्ति ।
द्वे[19] पक्षस्तोत्रीये नानुगृह्येते ।
[ते[20]] चेदनुजिघृक्षेत् त्रिणवं प्रथममुक्थं कुर्यात् ।
25 एकविंशं स्तोमं[21] षोडशिनं करोति ।
एषोऽस्य प्रकृतिस्तोमो भवति ।
अथाप्येवं तासां स्तोत्रीयाणामनुग्रहो भवति यथैतच्छौचिवृक्षिरिति[22] ।

**1** in B only. **2** B adds इति. **3** तद० G1, G2. **4** ०कृष्टं K. **5** अनङ्ग० G1, G2, J, K. **6** B adds यद् व्रतस्य. **7** ज्यौतिष्टोमानः B. **8** ०मति० B. **9** ०प्यभङ्ग० G1, G2. **10** ०येन G1, G2, J. **11** ०स्तमो ह० C; ०तमोह० G1, G2, J, K. **12** B has व्रतस्तोमान्वयानीति for व्रतम् । स्तोमा०…०स्तोमानीति (line 19). **13** Wanting in G1, J. **14** G1, G2, J add न. **15** G1, G2, J omit स्यात्. **16** ०ऽद्य G1, G2, J, K. **17** Wanting in G1, G2, J, K. **18** यः B. **19** द्विपक्ष० C, G1, G2, J, K. **20** Wanting in B, G1, G2, K. **21** ०शं षो० C, G1, G2, J, K. **22** ०क्षे० B.

छन्दोमपवमानमुत्तरस्य व्रतम् ।
स्तोमकारित आवापः ।
अथ खल्वत्र विधर्माकरिष्यन् स्तोमज्ञात्रेण कस्माद् धर्म करोतीति ।
द्वन्द्वयोः साम्नोर्याथान्तर्यात् पूर्वमाद[1]त्ते ।
5 अथाप्येतस्याविकृतं निधनं भवति ।
[2]अविकारः पूर्वो[3] विकारादि[4]त्येके ।
एकविंशान्युक्थानि ।
एकविंशस्तोमं षोडशिनं करोति ।
तद् व्याख्यातम् ।
10 प्रथमे सप्तरात्रेऽभ्यास उक्तः ।
उत्तरस्य पञ्चाहो बृहद्रथन्तरपृष्ठः ।
चतुर्थस्याह्न एकविंशः षोडशी ।
"पञ्चमस्याह्नः पार्थस्य लोक आकूपारम्" वात्रेयं वेति विचारयन्ति ।
Ārṣ. K. VII 12 b.
15 नानापुरुषकल्पौ स्यातामिति ह स्माह धानञ्जय्यः ।
अन्य [5]एवाकूपा[6]रमरोचयिष्यत, अन्य आत्रेयम् ।
आत्रेयं चैवाभिरूपतरं पञ्चमेऽहनि [7]स्थानंसम्मितम्, पञ्चमस्थाना अत्रय इति ।
चतुर्थस्याह्नः शुद्धाशुद्धीयस्य लोक आकूपारम् ।
20 पञ्चमस्याह्नः पार्थस्यात्रेयम् ।
पार्थं चैव नित्यम् ।
अहः पार्थं व्याख्यातम् ।
[8]आत्रेयं नु खलु कुर्वत उभयोरनुग्रहो भवति ।
व्रते हि पार्थं करिष्यन् भवति ।
25 चतुर्विंशं बहिष्पवमानं सप्तदशस्तोमं व्रतं करोति ।
तत्र त एवोक्थानां स्तोमविचारा य[9]त् सप्तदशे व्रते ॥ १३ ॥

---

1 ०दात्त G1, G2, J, K. 2 वि० G1, G2, J, K. 3 ०र्वोऽवि० C. 4 ०दिति C, G1, G2, J, K. 5 एवन्यकू० B; वाकू० G1, G2. 6 ०रंरो० B; ०रभिरो० C; ०रमराच० G1, G2, J. 7 ०ने स० K. 8 आत्रेणमा० G1, G2, J; आग्नेयमा० K. 9 इदं B; यान् K.

# अथ नवमः प्रपाठकः[1]

अथ[2] प्रतिष्ठाकामयज्ञ उत्तरः ।
स खल्वेकाह[3]क्लृप्तः ।
ते व्याख्याताः ।
जनकं[4]सप्तरात्रे चत्वार्यहीनिकानि ।
5 अह्नानि आहीनिकतन्त्राण्यनन्तत्वात् ।
उद्धरति षोडशिनं चतुर्थात् ।
[तद्[5]] व्याख्यातम् ।
व्याख्याता अर्काः ।
तेषां त[6]देवानुपूर्व्यं यत् त्रिरात्रे ।
10 ‘ध[3]र्ता[2] दि[3]वः[1]’ इति SV. 1. 558; 2. 578; RV. 9. 76. 1; PB. 14. 9. 4.
उत्तम एतासु स्वयोनिः ।
द्वितीयस्याह्नः सौभरम्, उक्थानां ब्रह्मसाम कुर्यादिति धानञ्जय्यः । cp. PB. 8. 8. 11.
15 त्रैककुभं हि चतुर्थे करिष्यन् भवति ।
औपगं[7]वमेवेति गौतमः ।
अतिरात्रे सौभरं करिष्यन् भवति ।
एवमुभयोरनुग्रह इति ।
षोडशि[8]मती रात्रिरहीनन्यायेन ।
20 अत्रैव चतुष्टोमः षोडशिमानिति शौचिवृक्षिः ।
शाम्बूपुत्रो नात्र च, नेति राणायणीपुत्रः ।

---

1 in C only. 2 Wanting in C, G1, G2, J, K. 3 ०काहः C. 4 ०कात्सप्त० G1, G2, K; ०का सप्त० J. 5 Wanting in B. 6 तदीयानु० B. 7 ०पवगव० G1, G2, J. 8 ०मति B.

पृष्ठ्यः स्तोम उत्तरस्य ।
षडहो बृहद्रथन्तरपृष्ठ[1]श्च एव ।
विश्वजिति हि पृष्ठ[2]्यानि करिष्यन् भवति ।
चतुर्थस्याह्नः ।
5 'प्रत्यस्मै पिपीषते' इति SV. 1. 352; 2. 790; RV. 6. 42. 1.
गौरीवितं षोडशिसाम ।
विराज[3]मन्वपायं स्वराजोपेयुः ।
पृष्ठापायाद्वै[4]वर्त्योऽपयन्ति ।
तत्रैतद् दार्ढच्युतमेतद् गायत्रीसामेहकारवत् षण्णि[5]धनम् ।
10 यथा रैवत्यः ।
वि[6]परिहरेदौदणो रन्ध्र इति गौतमः ।
एवमिडारम्भ[7]णा बृहतीति ।
न विपरिहरेदिति धानञ्जय्यः ।
अपि ह्येवमजामि ।
15 स किमर्थो[8] नित्यं कल्पं[9] च्यावयेदिति ।
अष्टरात्र[10]न्यायेन स्यात्, षोडशिका रात्रिश्च[11]तुष्टोमन्यायेन ।
अथापि कृतः षडहे षोडशीति ।
आयुष्कामयज्ञ उत्तरः ।
"स यज्ञवरात्रो नव प्राणाः" इति । cp. PB. 22. 12. 4.
20 त्रिकद्रुकानुपदधाति छन्दोमसादृश्यात् ।
अथाप्येत ऊनस्य पूर[12]यितारः ।
षोडशिका रात्रिः[13] स्तोमज्ञात्रेण, आषोडशिको ह्येवायुर्भवतीति ।
पशुकामयज्ञ उत्तरः ।
तत्र पञ्चाहं करोति ।
25 "पाङ्क्ताः पशवः" इति । PB. 22. 13. 3.
यदु विश्वजितं पङ्क्ता[14]नि पृष्ठानीति ।
त्रिकद्रुकानुपदधाति छन्दोमसादृश्यात् ।
अथाप्येत ऊनस्य पूरयितारः ।
तान् पुरस्तात् पञ्चाहस्य करोति ।

---

**1** ॰पृष्ठ C, G1, G2, J, K. **2** पृष्ठानि C, G1, G2, J, K. **3** ॰जाम॰ C, G1, G2, J, K. **4** व is wanting in C. **5** षष्टिधनं G1, G2, J, K. **6** अपि प॰ B. **7** ॰म्भयोः C, K; ॰म्भयो G1, G2, J. **8** ॰र्थे B. **9** ॰ल्पय G1, G2, J; ॰ल्प K. **10** ॰रात्रस्याषो॰ C, G1, G2, J; ॰रात्रास्याषो॰ K. **11** ॰श्चतु॰ B. **12** पूरिता॰ G1, G2, J, K. **13** ॰रात्रस्तो॰ B. **14** पशूक्तानि C, G1, G2, J, K.

विश्वजितंँ हि रात्र्युपायं[1] करिष्यन् भवति ।
आयुषोऽनुष्टुभि बृहत् करोति ।
त्र्यहे सेमं[2] बृहद्रथन्तरे युयुक्षमाणः ।
अजामर्थं वैव[3] स्याद् वार्कजम्भं वेति विचारयति ।
5 अथापि नैतांँ स्वतन्त्रांँ स्तोमविधां बृहदापद्यते ।
तत्राकूपारं तृचसमाप्तये ।
तदेतन्नवमाद्[4] भागान्वितम् ॥ १ ॥

अथैष दशरात्रः[5] बृहद्रथन्तरपृष्ठ एव ।
तत्र खलु विश्वजितं दशमं करोति ।
10 स खलु विश्वजित् क्रियमाणो दशमतन्त्रं प्रत्यूहति ।
तत् प्रत्यूहमानं पूर्वे तन्त्रे प्रत्यूहति ।
अत्र यदेवैकं पुरा सप्तमे कृततन्त्रं[6] भवति तत् प्रच्यवते ।
अथैते षष्ठनवमयोस्तन्त्रे[7] व्यत्यस्यति ।
षोडशाहिकैरयंँ[8] स्तोमैरभिविधीयते[9] ।
15 स त्रयस्त्रिंँशंँ स्वतन्त्रमचिकीर्षीत् ।
तस्येतरस्थानं परीतं भवति ।
अत्र खल्वयंँ सर्वो दशरात्रो नानातन्त्रो भवति ।
समूहति बार्हद्रथन्तरपृष्ठान्[10] नित्याभिः ।
अनित्यो[11] ह मात्रायामकरिष्यत्, अनित्यो ह्ययं दशरात्र इति ।
20 नित्यास्तु[12] चतुर्थपञ्चमयोर्जगत्योः ।
याश्चतुर्थे नित्याः सप्तमेऽहनि ताः करिष्यन् भवति ।
अतो नित्याः करोति ।
तद्वशेन पञ्चमे कुशलं यदनित्याः[13] ।
त्रिष्टुभो[14] नित्याः ।
25 नित्यां[15] एताचिकीर्षीदित्यपरम् ।
नित्ये[16] तन्त्रेऽनित्यौ स्तोमौ ।
तत्र नित्यानित्यौ[17] अभिरूपौ[18] ।

1 ०पायाय C, G1, G2, J, K. 2 सामं B. 3 वैत G1, G2, J, K. 4 ०न्नभवमाद् G1, G2, J. 5 ०रात्रे G1, G2, J. 6 कृतं तन्त्रं C, G1, G2, J. 7 पृष्ठ० B, G1, G2, J, K. 8 षाडहिकै० B; षोडशाहिक० G1, G2, J. 9 ०ते G1, G2, J. 10 B adds नित्यान्. 11 ०त्ये B. 12 ०सु C, G1, G2, J, K. 13 यो नि० B; यनि० G1, G2, J, K. 14 Wanting in G1, G2, J, K. 15 ०त्याभि G1, G2, J. 16 C, G1, G2, J. K add ह. 17 ०त्याभि० G1, G2, J, K. 18 ०पौ B.

यदु षष्ठी[1] उभयोर्[2]नित्या ।
उभयꣳ ह्येव तत्रानित्यꣳ स्तोम[3]श्चैव तन्त्रं च ।
नित्यास्तु परयोरह्नः ।
नित्याभिर्ह्येतस्य त्र्य[4]हस्य समूहः ।[5]
5 नित्या[6]स्तु नवमे ।
अन्तर्विधा हि दाशमिक्यः ।
विश्वजित्यन्तर्वि[7]धाः करिष्यन् भवति ।
तत्र कुशलं यज्ज्योतिष्टो[8]म्यं करोति ।
तन्त्रान्विते च पृष्ठान्विते च ।
10 अथ खलु दीर्घतमसोऽर्कमष्टमेऽहनि करिष्यन् भवति ।
अन्तसामान्त इति ।
तन्त्रस्थः स्वा[9]शिरामर्कः ।
सप्तमे त्रय एव, एकोऽग्नेरर्कस्तन्त्रा[10]पेतः ।
तन्नव[11]ममहर्भवति ॥ २ ॥

15 अथ द्रव्यसमुद्देशः ।
यानि यथास्थानं व्याख्यातानि [ तानि[12] ] यान्ययथास्थानं तैरेवाष्टभिः पर्यायैस्तेषामन्वयꣳ समन्वीक्षेत ।
नाना ब्रह्मसामानि नानात्वार्थः ।
श्यैतनौधसवर्णानि वार्हद्रथन्तरपृष्ठ्यान् नानाग्निष्टोमसामानि नानात्वार्थः ।
20 ऐडानि भूयिष्ठानि करोति ।
सामान्तस्य स्था[13]नेऽन्तसामान्तम् ।
अथाप्येष तृतीयसवनसामान्तः ।
तमदिदर्शयिषी[14]न्नेनाच्छन्दसि[15] ।
एवंभूयो नानात्वमिति ।
25 तानीमानि[16] सप्त छन्दाꣳसि नवा[17]हं नानुभवन्ति ।
तत्रे[18] ककुभं च विराजं चोपप्रयुङ्क्ते ।
सा प्रायात् तानि कुशलं यद्रोहेण प्रयुङ्क्ते ।

---

1 पृष्ठ C; षष्ठ G1, G2; — J. 2 °यीर C, K; °यरनि° G1, G2, J. 3 सोम° G1, G2, J. 4 ह्यहस्य C, J, K; ह्यथह G1, G2. 5 B repeats it. 6 नित्योऽस्तु C, G1, G2, J. 7 °वि° B, G1, G2, J, K. 8 °ष्टोम्यौ C, G1, G2, J, K. 9 स्व° C. 10 °न्त्रयैतः G1, G2, J. 11 °ममहर्ईरति C; °ममर्हति G1, G2, J. 12 Wanting in B. 13 स्थानं तत्सा° C; स्थाने तं सा° G1, G2, 14 °यिष्यन्ना° B. 15 °सेऽयं भू° B; °स्वेवं भू° G1, G2, J, K. 16 C adds भवन्ति. 17 नव्याहन्ना-क्नतानि । B; वाहंता नु भवन्ति G1, G2, J, K. 18 मत G1; तत G2.

'अग्न आयूꣳषि पवसे' इति SV. 2. 814, 868; RV. 9. 66. 19; PB. 6. 10. 1; 9. 8. 12.

प्रथमेऽहनि करोति ।
कस्य हेतोरिति ।
5 शुशुत्सद्यज्ञोऽयं भवति[1] ।
सैषाग्नेयी पविताभिव्याहारा शुद्ध्यर्थेऽभिरूपा ।
[अथापि[2] शश्वदिहाग्निष्टुतं तैत्तिरीया अधीयते ।
सैषाग्निष्टुदनुग्रहाय स्यात् ।
स्वादिष्ठामार्भवीयाम्, एषा स्वादुमती पविताभिव्याहारा[3] शुद्ध्यर्थेऽभिरूपा । ]
10
अथाप्यैकाहिकी भवति ।
अथ खल्वत्र पौष्कलं भवति ।
शुद्धस्यैतद्[4] भवति यत् पुष्कलमिति ।
अथाप्यैकाहिकमेकाहसमासꣳ शश्वदिह तैत्तिरीया[5] अधीयते ।
15 नाना मध्ये[6] निधनानि न दाशरात्रिकाणि ।
मध्ये[7] निधनान्यनु भवन्ति ।
अतश्छन्दस्यान्यु[8][पप्रयुङ्क्ते[9] ।
'आ सोम स्वानो अद्रिभिः' इति SV. 1. 513; 2. 1039; RV. 9. 107. 10.

20 तृतीयस्य बृहती सप्तदश साध्यासां करिष्यन् भवति ।
अत एतां करोति ।
एषां[10] सामन्या[11] तृचप्रथमा तृतीयस्थानेति[12] ।
'बभ्रवे नु स्वतवसे' इति । SV. 2. 794; RV. 9. 11. 4.
षडृचꣳ षष्ठसप्तमयोर्विहरति ।
25 सन्तानार्था नवर्चम् ।
एतस्य प्रथमेऽहनि तृचं कृतम् ]
'उपास्मै गायता नरः' इति । SV. 2.1. 113; RV. 9. 11. 1; PB. 6. 9. 1; 16. 11. 2.

---

1 शिशुः सद्योशोऽयं C; शिशुत्सद्योशायं G1, G2, J; शिशुत्स० K. 2 B omits अथापि … भिरूपा (line 10). 3 पठिता० C. 4 श्रुद्धय० C, G1, G2, J, K. 5 ०रीयका B. 6 भध्ये-C. 7 मध्ये-C. 8 अछन्द० G1, G2; अंतछन्द० J; अतछन्द० K. 9 पप्रयुङ्क्ते … कृतम् (line 26) is wanting in B. 10 एषां G1, G2, J, K. 11 ०मान्या G1, G2, J, K. 12 ये स्था० G1, G2, J, K.

व्रत्यं[1]ꣳ सप्तमस्य समूढाज्यम्।
एतत् स्थानं[2]सम्मितम् ।
छन्दस्ये उत्तरयोः ।
एते रूपसम्पन्ने इत्येते रूपसम्पन्ने इति ॥ ३ ॥

5 पञ्चमः[3] पटलः

अथैष कुसुरुबिन्दः ।
तत्र खलु बृहद्रथन्तरे[4] करोति ।
राथन्तरबार्हता[5] ह्येते स्तोमा इति ।
कानि तन्त्राणीति ।
10 दशरात्रस्तोमविकृत इत्येके ।
द्वैपृष्ठ्या[6]द् द्वे तन्त्रे स्यातामित्याचार्याः ।
प्रथमद्वितीययोरिति शौचिवृक्षिः ।
ए[7]ते आहीनिक इति ।
तद्विदं प्रथमतन्त्रं प्रवतीभिः क्लृप्तमपरूपम् ।
15 अन्यत्रोपक्रमाद् व्यत्यसिष्यꣳस्तु भवति ।
तस्य स्थाने ज्यो[10]तिष्टोमं करोति—प्रथमस्य प्रथमꣳ राथन्तरस्य राथन्तरमिति ।
एका[11]हिके इति धानञ्जय्यः ।
एवम[12]पर्वविलोप इति ।
20 तद्विदं[13] गोस्तन्त्रमन्तवि[14]धाभिः क्लृप्तमपरूपम् ।
अन्यत्रान्ताद्व्यत्यसि[15]ष्यꣳस्तु भवति ।
तस्य[16] स्थाने द्वितीयतन्त्रं करोति—
द्वितीयस्य द्वितीयं बार्हतस्य बार्हतमिति ।
स खलु दशमेऽहनि द्वितीयतन्त्रमुद्धृत्य तस्य स्थाने ज्योतिष्टोमं[17] करोति,
25 एकाहतन्त्राद्रात्रिमुपजिगमिषन् ।
उ[18]क्तो द्रव्यागमः ।
समेषु स्तोमेषूभयोस्तन्त्रयोः पुनानां बृहतीं करोति ।
उभयोर्ह्येषां[19] [20]नित्येति ।

1 व्रतꣳ G1, G2, J, K. 2 ०नं स० G2, G2, J, K. 3 In B only. 4 C adds ते. 5 ०तानि० B. 6 ०ष्टया B, K; ०ष्ठये G1. 7 अते C. 8 G1 omits प्रवतीभिः ··· गोस्तन्त्रं (line 20). 9 ०नुरू० K. 10 ज्यौ० C, G2, J, K. 11 एको हि B. 12 एवं प० B. 13 तन्विदं C. 14 ०विदधाभिः G1, G2. 15 ०शिष्यꣳ C. 16 तत् B. 17 ०मा G1, G2, J. 18 उक्तौ G1, G2, J. 19 ०षां B, G1, G2, J; ०तां K. 20 इति B.

उष्णिक्ककुभौ वा ।
अपि समाने भवत इत्यपरम् ।
द्विरात्रन्याय इवेह भवति[1] ।
द्वैतन्त्रेण द्वैपृष्ठ्येन[2] ।
5 तत्र द्वैरात्रिकय[3] उष्णिक्ककुभः करोति ।
अथ यत्र राथन्तरस्यार्हस्तृचार्थो[4] भवति, तद्यथोदश्चतुर्वीरे[5] व्याख्यातं तथा तत्र भवति ।
बार्हतेष्वहस्सु यौक्ताश्वद्वाविष्मते, अग्निष्टोमेषु द्वाविष्मर्तमौक्ष[6] उक्थेषु मौक्षमुक्थसामेति ।
10 विभक्तान्युक्थानि ।
राथन्तराणि राथन्तरेषु ।
बार्हतानि बार्हतेषु ।
तदेवार्काणां स्थानं यद्दशरात्रे[7] तयोः सत्रगतयोर्बार्हतस्य[8] कविमन्तं पर्यासं करोति ।
15 कालेयमच्छावाकसाम ।
"अभिप्लवन्यायेनैकविंशोऽतिरात्रः ।" cp. PB. 22. 15. 5.
"य एकस्तोमानामुत्तमस्तस्य स्तोमान्वयी षोडशीत्यविचारमेकविंशः" ॥४॥ Ap. Ś. 22. 24. 7; Arṣ. K. VIII. 9. K; cp. PB. 22. 15. 9.
20 अथैष छन्दोमवान् बृहद्रथन्तरपृष्ठ एव[9] ।
तत्र खलु विश्वजितं दशमं करोति ।
स खलु विश्वजित् क्रियमाणच्छन्दोमान् प्रत्यूहति ।
ते प्रत्यूहमानाः षष्ठमहः प्रच्यावयन्ति ।
"पृष्ठ्यावलम्बस्य पञ्चाहः प्रथमस्याह्नः प्रत्नवद् बहिष्पवमानं
25 पञ्चमस्याह्नः" । Arṣ. K. VIII. 10 a.
" 'असृक्षत प्र वाजिनः' इति SV. 1. 482; 2. 384; RV. 9. 64. 4; cp. LŚ. 4. 8. 12.
अनुरूपः[10]" इति शाण्डिल्यायनः । PB. 13. 7. 5.
उपरिष्टादिमं नवर्चमावर्तयिष्यन् भवति ।
30 कथमकृतस्यावर्तनं[11] स्यादिति ।

---

1 G1, G2 omit ति … तद्य ( line 6 ). 2 वै पृ० B. 3 ०त्रिकर C, J, K. 4 ०स्यान्यासुचार्थो B. 5 तद्यथा .० K. 6 ०मता० J. 7 ०रात्रि C, G1, G2, J, K. 8 ०तमस्य J. 9 त्रयमच्छ० B. 10 ०पा G1, G2, J. 11 र्त is wanting in K.

न[1]वाह्योगा इमा भवन्तीति धानञ्जय्यः ।
कथमसमापयिष्यन्नवाहं नवाह्योगाः कुर्यादिति ।
व्याख्यातः समूहः ।
३ १ २ ३ २
'ऋतावानं वैश्वानरम्' इति SV. 2. 1058.
5 होतुराज्यम् ।
वैश्वानरीयस्य स्थाने वैश्वानरीयं[2]ः ।
त्रैककुभे उत्तरयोः ।
एते रूपसम्पन्ने इति ।
उद्धरति कण्व[3]रथन्तरम्, अजामि हँ[4] भवति ।
10 तत्रैतत् सोमसाम ।
एवमिडार[5]म्भणा बृहतीति ।
गौरीवितापायात् पृथक् स्वाराणि करोति नानासाधुरहीन इति ।
स यदेतान्येतानि रूपसम्पन्नानीति ।
प्रथमं[6]मात्रेयं नमँ[7]सोपहत्यैतदु बृहद्द्योनि बार्हतेऽहनीति ।
15 स्थानसम्मिते उत्तरे इति ।
एते रूपसम्पन्ने इति ।
स्वाराणि त्रैकं[8]कुभानि माध्यन्दिनान्त्यान्येतानि रूपसम्पन्नानीति ।
ऐडानि जागता[9]न्यार्भवान्त्यानि ।
इडां[10]भक्त्यो [11]हि छन्दोमा इति ।
20 स यदेतान्येतानि राथन्तरं[12]बार्हतेडानीति ।
नवमेऽहनि दीर्घतमसोऽर्कमनुकल्पयन्त्येके ।
अहर्श्रात्रेण स यदनुष्टुभि ।
एतदस्य समूढे वा[13] न भवति ।
त[14]न्त्राकूपारं तृचसमाप्त्यै ।
25 अथ येनानुकल्पयन्ति बृ[15]हत्यां वा[16]नुक्लृप्तं मन्यमानाः ।
यथा वैतं[17]दग्नेरर्कः ।

---

1 नवाह्योग ··· कुर्यादिति is wanting in G1, G2; तत्वाह्योगा J, K. 2 ०रीयम् C, J, K; ०रीय G1, G2. 3 काण्व० C, G1, G2. 4 हि C, G1, G2, J, K. 5 ०म्भणा संभरराया बृ० G1, G2; ०म्भराय संभरराया बृ० J; ०म्भणा संभरंण्या बृ० K. 6 ०मारात्रेयं B. 7 तमह्योप तत्र B. 8 त्रैष्टुभानि C, G1, G2, J, K. 9 ०तांन्यार्भवनि G1, G2, J; ०तांन्यार्भवंति K. 10 ०डामक्त० C. 11 ०योभि B. 12 ०रे बा० B. 13 स्वानं for वा न in K. 14 तन्त्राकू० C; तत्रकू० G1, G2, J. 15 बृ० C. 16 यादानु० B. 17 ०ग्नेऽर्कः C, G1, G2, J.

'सप्तमेऽहनि कृताकृत इति समापद्यन्ते[1]' । Dh. Dr. Ś. 9. 3. 4.
दशमेऽहनि सामानि समूहं[2]द्वाजं[3]जिद् द्विपदास्वनुगृह्णाति संयुक्तमेतेनाह्ना भवतीति ॥ ५ ॥

कथं दशमधर्माः, मानसमिति
5 कर्तव्या इत्येके ।
तद् वां[4]हश्चायत इति ।
अकर्तव्या इत्यपरम्[5] ।
[6]ऋचसमास्तथैवैनां[7]नुकल्पयन्ति ।
बृहत्यां वानुक्लृप्तं मन्यमानान् दशमं च ।
10 लुब्धश्चं[8] दशरात्र इति ।
अथास्यं[9] कृतेन विश्वजिता मानसमध्यशाययिष्यत् ।
अथाप्यनुष्टुप्संयोजनास्ते ।
जां[10]गतमिदं स्थानं भवति ।
अथापि सत्रोत्पादास्ते ।
15 अहीनोऽयं भवतीति ।
"अभिचर्यमाण यज्ञ उत्तरः ।" cp. PB. 22. 17. 3; Āp. Ś. 22. 24.1.

स खल्वे[11]काहक्लृप्तः ।
ते व्याख्याताः ।
20 तस्य सवं[12]नभाजः[13] स्तोमाः सं[14]वनवद्भाजो वेति विचारयन्ति ।
एवं सवनं[15]स्तोमाः सं[16]प्रयुक्ता भविष्यन्तीति ।
"उक्थ्यं[17]स्थं ज्योतिषं बृहत्पृष्ठं बार्हतं तन्त्रम्[18] ।" cp. Ārṣ K. V. 124a.

द्वितीयं हि स्थानमापन्नमिति ।
25 तं[19]त्र यो द्रव्यविकार उक्थ्यत्वाच्च बृहत्पृष्ठत्वाच्च सं[20] भवति ।
अपि च समन्तं समन्तीकाराय ।

---

1 समापद्यन्ते C, K; सम्पपद्यन्ते G1, G2, J. 2 ०ह्रा० B. 3 ०जज्ञ B; ०जजि G1, G2, J. 4 व्यहर्जा० B; व्यंहशा० G1, G2, J, K. 5 ०म C, G1, G2, J, K. 6 ऋच ... ०मानान् is wanting in C, G1, G2, J, K. 7 ०नाननु० is suggested. 8 श्च द is wanting in B. 9 ०प्यक्लृ० C, G1, G2, J, K. 10 जागत is wanting in J. 11 खल्वै० C, C1, G2, J. 12 स्वव० B. 13 ०जस्तो० B, C, J, K. 14 सा(स C)मावद्० B, C, G2, J; समाः समावद्० G1. 15 ०नाः स्तो० G1, G2, K. 16 समं प्र० C, G1, G2, J, K. 17 उक्थसंस्था B. 18 तन्त्र B. 19 तत्र G1; तत्र G2, J. 20 Wanting in G1, G2, J, K.

अथात[1] एकादशरात्रः ।
दशरात्रान्ता अहीनाः ।
द्वादशाहप्रभृतीनि सत्त्राणि ।
किमेकँ स्थानमन्तरीय[2]मिति वा ।
5 एकादशरात्रं करोति ।
"पृष्ठ्यावलम्बस्य पञ्चाहः, पृष्ठ्यस्तोमस्य [3]षष्ठमहः" इति । Ārṣ. K. VIII. 11. H.
[4]षष्ठमहरभ्[5]यासं धृतिस्वरा[6]दुक्तं पयोधा ।
अप्येवं द्वे बृहत्[7]यौ [8]स्वरावुक्तौ बृहतीति[9] ।
10 "पुनः कण्वरथन्तरे स्वं[10] लोकमेति[11] ।" Ārṣ. K. VIII. 11. H.
अजाम्यर्थं व्याख्याताः छन्दोमाः ।
दशमस्य स्थाने चतुष्टोमं करोति ।
कस्य हेतोरिति ।
छन्दोमस्य छन्दोम[12]मेत्यग्निष्टोमस्यात्यग्निष्टोमँ स[13] रथन्तरपृष्ठो ज्योति-
15 ष्टोमतन्त्रो यथा दशममहरिति ॥ ६ ॥
[14]अथ दशमयज्ञम्, मानसमिति ।
अकर्तव्या इत्येके ।
स्वेन[15] नामधेयेनैकाह [16]आदिश्यते ।
"चतुष्टोमोऽग्निष्टोमः" इति । ĀP.Ś. 22. 24. 11.
20 अथापि न दाशमिकं लिङ्गं दृश्यते ।
यथैतद् बहिष्पवमानस्यावृत्तिः साम्नां विप्रच्या[17]वनमनुष्टुभः परोत्ती-चिकीर्षेति ।
कर्तव्या इत्याचार्यः ।
येऽन्ये मानससंयु[18]क्ताः सँस्थाप[19]नीयं त[20]न्मानसं "चतुष्टोमोऽग्निष्टोमः"
25 इति । ibid.

---

**1** अथ ते G1, G2, J, K. **2** ०रि० B; ०रीया० K. **3** G1 adds षष्ठमस्य. **4** पृष्ठ० G1, G2, J, K. **5** ०भ्या राजति स्व० C; ०भ्यास जनिस्व० G1, G2, J, K. **6** स्वराड्डुक्तं B, K; स्व × × क्तं Cक; स्वरांदुक्तं Cख, G1, G2, J. **7** बृहदृक् B. **8** स्वरासूक्ता B; स्वराड्डुक्ता G1, G2, J, K. **9** ति is wanting in Cक. **10** स्वलो० G1, G2, J. **11** ०मिति C. **12** ०ममत्य० B; मत्य० for छन्दोममेत्य० in G1, G2, J, K. **13** स उच्छन्दो रथ० C, G1, G2, J, K. **14** कथं दशमधर्मा मानसच्छन्दोमस्य छन्दोमवत्यग्निष्टोमस्यात्यग्निष्टोमँ स उत्तररथन्तरपृष्ठो ज्योतिष्टोमः कथं दशमधर्मा मान० C, G1, G2, J, K. **15** स्तेन G1, G2, J, K. **16** आशि० C, G1, G2, J. **17** विप्रस्यावन्नम० G1, G2; विप्रस्यावनम० J, K. **18** ०युक्तेभ्यः C, G1, G2, J, K. **19** ०नी B. **20** तन् is wanting in C, G1, G2, J, K.

अथाप्यकृतेन विश्वजिता मानसमध्यशाययिष्यत् ।
अथापि सत्रोत्पादं नाहीनकृतावचिकीर्षीत् ।
दृश्यते च[1] दशमभृते मानसात्, तथा मानसभृते दशमात् ।
न चैतद् दशमस्य यथा व्याख्यातम् ।
5 दशमसंयोजना[2]स्तु कर्तव्याः ।
एष आचार्यसमयः ।
अथापि तन्त्रमहर्ग्रात्रे बलिष्ठं ब्रुवते, उच्चांता[3] स्वादिष्ठे दाशमिक्यौ दृश्येते[4] ।
अथापि स्थानेन[5] भागागमेन[6] तन्त्रोपधिना छन्दोम्येनेति ।
स चैव चतुर्विंशो दाशमिकोऽन्ते दृश्यते ।
10 यद्वैतत् स्वेन नामधेयेनैकाह आदिश्यते इति, बहुधैकाहः[7] स्वेन नामधेये-
नादिश्यते[8] ।
यथैष एवाश्वत्रिरात्रे[9]ऽभिप्लवे [ च[10] ] त्रिकद्रुका इति ।
अथैनानाहीनिकतन्त्रान् ब्रूमहे ।
यथो[11] एतन्न दाशमिकं लिङ्गं दृश्यत इति, दृश्यत[12] इति ब्रूमः[13] ।
15 यथा व्याख्यातमस्थानं तु सामव्यूहस्य समूढो[14] दशरात्रः[15] ।
दृश्यते च बहिष्पवमानस्यानावृत्तिः ।
अन्यासु चानुष्टुप्सु दशमतन्त्रं यथा त्रिककुभः[16] ॥ ७ ॥

तत् किम्प्रभृतयोऽहीना इति ।
उक्थप्रभृतय इति बह्वृचाः ।
20 तिस्रो मुहूर्तमात्रा अग्निष्टोमे स्तुतशस्त्रैर्नाभिविधीयन्ते ।
ता अद्यापि विधीयन्ते इति ।
शश्वदङ्गषोडशिप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागः प्रथमं स्थानं लभते ।
सर्वे भागा आप्यन्ते सर्वे भक्ताः ।
25 यः स पुराहीनो भवति सोऽद्याहीन इति ।
शश्वदङ्गातिरात्रप्रभृतय एव भवन्ति ।
सर्वमादित्यचरितम्[17]भिविधीयते ।
उभौ वर्णौ प्रकृति[18]रेव ।

---

1 तद् C. 2 ०योगास्तु C. 3 उच्चा-स्वा० C; उच्चता G1, G2, J. 4 ०श्यते B, G1, G2, J, K. 5 स्थानभा० G1, G2, J. 6 भागमेन B. 7 ०धैकाहाः C, G1, G2, K; ०धिकाहाः J. 8 ०न नादि० G1, G2; ०नादित्स्यंते J; ०ष्यन्ते K. 9 ०तिरात्रे प्लु० G1, G2, J; ०त्रे प्लु० K. 10 Wanting in B. 11 यतो B. 12 दृश्यत इति is wanting in C, G1, G2, K. 13 ब्रूया G1, G2, J; ब्रूयात् K 14 समूढेति B. 15 ०त्रे G1. 16 ०भिः G1, G2, J, K. 17 ०त अभि० B. 18 क्रुतकृति० C, G1, G2, J, K.

अत[1] ऊर्ध्वं शश्वदङ्गद्विरात्रप्रभृतय एव भवन्ति ।
द्वे पृष्ठे चर्यां ल[2]भेते ।
द्व्यान्यहानि राथन्तरबार्हतानीति ।
तदिदं बृहदतिरात्रे स्थानं तदन्य[3]स्थानं लभत इति ।
5 शश्वदङ्गत्रि[4]रात्रप्रभृतय एव भवन्ति ।
एवमहर्भाजोऽहःसवनभागाः ।
स्वस्थाना[5]तिरात्रावनुष्टुबिति ।
श[6]श्वदङ्गचतूरात्रप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागोऽहर्भ[8]जते ।
10 यथा पूर्वे भागा इति ।
शश्वदङ्गपञ्चरात्रप्रभृतय एव भवन्ति ।
शुध्यत्युहैतच्चतुर्थमहः पञ्चमेऽहनि [ रा[7]त्रिः सज्जत इति वा ] ।
शश्वदङ्गषड्रात्रप्रभृतय एव भवन्ति ।
अत्रैष चतुर्थो भागो भूयिष्ठभाग् भवति ।
15 शश्वदङ्गसप्तरात्र[8]प्रभृतय एव भवन्ति ।
आसप्तान् नानात्वान्नि[9]वर्तन्ते,[10] नानासाधुरहीन इति ।
शश्वदङ्गाष्ट[11]रात्रप्रभृतय एव भवन्ति ।
शुध्यत्यु[12]हैतत् सप्तममहरष्टमेऽहनि रात्रिः स[13]ज्जत इति ।
शश्वदङ्गनवरात्रप्रभृतय ए[14]व भवन्ति[15] ।
20 अष्टरात्रे पुनरभ्युद्धृतेषु भागेषु जगत्यस्थाना भवति ।
सा[16]द्यस्थाना भवति साद्यस्थानं लभत इति ।
शश्वदङ्गदशरात्रप्रभृतय एव भवन्ति ।
ए[17]तद्धि पराध्यर्यमहर्नानात्वं य[18]द्दशमम्, नानासाधुरहीन इति ।
शश्वदङ्गैकादशरात्रप्रभृतय एव भवन्ति ।
25 शुध्यत्यु[19]हैतद् दशममहरेकादशेऽहनि रात्रिः सज्ज[20]त इति ॥ ८ ॥
अथायं द्वादशाहोऽहीनो भवती३ सत्रमिति ।

1 B adds वा अत. 2 लभते C, G1, G2, J, K. 3 ०दद्य स्था० C, G1, G2, J, K. 4 ०ङ्गयत्रि० G1, G2. 5 ०नावृत्रोचतुष्टु० G1, G2, J; ०नावृत्ताव० K. 6 शश्वदङ्ग० ··· एव भवन्ति (line 11) wanting in G1, G2. 7 B omits रात्रिः ··· वा. 8 ०त्रे प्र० J. 9 ०नि व० C, G1, G2, J, K. 10 ०ते B. 11 रात्र is wanting in G1, G2, J. 12 ०त्याहै० G1, G2, J, K. 13 सिध्यत B. 14 एवं J. 15 शश्वदङ्ग० ··· लभत इति is wanting in G1, G2. 16 C, J, K omit साद्यस्थाना भवति. 17 अतद्धिप० C, G1, G2, J. 18 सद० B. 19 ०त्यहै० G1, G2, J, K. 20 सज्यत B.

अहीनो भवतीत्याहुः ।
एको दीक्षेतेति भवति ।
अथाप्याहीनिकान्यहानीत्याचक्षते ।
दाशरात्रिकाण्यहानि ।
5 अथाप्याह—"यद् गौरीवितेनाहीनानी[1]ति ।" cp. PB. 11. 5. 15.
अथाप्याह—"यजमानमेवैतया वर्द्धयन्ति" इति । PB. 11. 11. 4.
अथापि वैरूपे वदति—यजमानं वानुप्रतितिष्ठन्तमुद्गाता प्रतितिष्ठतीति ।
अथाप्यस्मिन् दक्षिणाप्रवादो भवति ।
"ध्वस्ने वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वै[2]तदश्विभ्याꣳ स[3]हस्राण्यदित्स-
10 ताम्" इति । PB. 13. 7. 12.
दक्षिणावन्तोऽहीना इति ।
अथापि शश्वदनेनाध्वर्यवो याजमानं परि[4]चक्षते ।
यथाहीनेनेति ।
सत्रमित्यपरम् ।
15 उभय[5]तोऽतिरात्रो भवति ।
अन्यतरतोऽतिरात्रा अहीनाः ।
समाहित[6]ः प्रायणीयोदयनीयो भवति ।
व्यॉ[7]हितप्रायणीयोदयनीया[8]ः । cp. PB. 23. 1. 3.
अथाप्यन्वहं गौरीवितो भवति ।
20 नानास्वरा अहीनाः ।
अथाप्यस्मिन् सत्रवादरूपो भवति ।
यो वै देवानां गृहपतिं वेदसत्रे गृहपतिर्भवति ।
भारद्वाजायना वै सत्रमासत ।
स्तोमो युज्यते सत्रियेभ्यो गर्भः प्रतिष्ठायैव सत्रमासते ।
25 [ अङ्गि[10]रसो वै सत्रमासत । ]
गौपायनानां वै सत्रमासीनानां सं[11]तः सत्रादुदस्थानौ[12] ३ स्थिता३दिति ।
cp. PB. 13. 12. 5.

---

1 ०नानि शश्वदङ्गत्रिरात्रप्रभृतय एव भवन्त्येवमहर्भाजोऽहःसर्वभागाꣳ स्वस्थाना रात्रावनुष्टुबिति शश्वदङ्गचतूरात्रप्रभृतय एव भवन्ति C, G1, G2, J; ०नानीति शश्वदङ्गातिर-रात्रप्रभृतय एव भवन्त्यनित्यता K. 2 वैद० C, G1, G2, J. 3 स्रह० G1, G2, J. 4 परिचक्षे G1, G2, J. 5 ०तोत्रि० G1, G2, J. 6 ०तप्रा० B, C; ०ताः प्रा० K. 7 व्याहित० B; व्याहिति० G1, G2, J. 8 C, J, K add अहीनाः. 9 ०भ्योऽहभ्यः प्र० C, G1, G2, J; ०भ्योऽहर्भ्यः प्र० K. 10 B omits अङ्गिरसो ··· ०मासत. 11 यतः C, G1, G2, J, K. 12 [illegible]

उभयं भवतीति लामकायनः, उभयथा ब्राह्मणं भवति।
उभयथेष्टं वेद य[1]त उभयेषामयं प्रत्ययः।
तद्येऽस्मिन्नहीनवादाः प्रत्ययत्वात्ते भवन्ति।
स[2]त्रं तु भवति[3]।
5 सत्रकारोऽस्य भवति।
नैवाहीनेन[4] सत्रमित्यपरम्।
तद[5]प्येवमिव ब्राह्मणं भवति—"अन्यस्मै वै कामाय सत्रम्, अन्यस्मै यज्ञो न तत् सत्रेणाऽऽप्नोति, य[6]स्मैकं यज्ञो न तद् यज्ञेनाऽऽप्नोति, यस्मै[6]कं[7] सत्रम्।" इति। PB. 22. 3. 2; 22. 10. 2; 23. 8. 2.
10 तद्यथाश्वत्थलो वृक्षो नैवाश्वत्थं इति वदनायनः।
अनश्वत्थ इति।
त्रयोऽहीना इति धानञ्जय्यः।
एकाहाहीनोऽहीनाहीनः सत्राहीन इति।
अयं ज्योतिष्टोमोऽतिरात्रः षोडशिमाने[8]काहाहीनः।
15 [ अ[9]त्र हि न ] किञ्चनैकाहिकं कर्म हीयत इति[10]।
द्वादशाहोऽही[11]नाहीनः।
कि[12]ञ्चनाहीनिकमहर्हीयत इति।
गवामयन॑ स[13]त्राहीनः।
अ[14]त्र हि न किञ्चन सात्रिकमहर्हीयत इति।
20 तदिदं कुशलोद्दि[15]ष्टमिति शाण्डिल्यायनः।
यस्य स्यादहीना[16]दहीन इति यस्य तु स्याद[17]हर्वर्तयेति द्विरात्रात्[18] प्रभृतयस्तस्याहीना इति।

तदपि शश्वद् ब्राह्मणं भवति।
प्रजापतिर्यज्ञक्रतूनसृजत।
25 अग्निष्टोममुक्थ्य॑ षोडशिनमतिरात्रम्।
त[19]मेते द्विरात्रप्रभृतयोऽहर्गणा ब्रुवन्।

---

1 यं त G1, G2, J, K. 2 सत्रंस्ते भ० B. 3 ०न्ति B, G1, G2, J. 4 ०होनोन B, G1, G2, J, K. 5 यत्तद० C; यतद० G1, G2, J. 6 यस्यैकं for यस्मैक in C. 7 ०त्थल K. 8 ०ने एकाहीनः G1, G2, J. 9 अत्र ··· न wanting in B. 10 Wanting in G1, G2 along with the next three lines. 11 ऽहीना is wanting in C. 12 अत्र हि न कि० C, K; न कि० J. 13 सत्रमहीनः C, G1, G2; सत्रहीन J. 14 अत्र हि न is wanting in J. 15 कुशलो भृतयस्तस्याहीना इति तदपि शश्वद् ब्राह्मणं भवद् द्विष्ट० C, G1, G2, J. 16 ०दहाना० B, K. 17 ०दहर्वर्त्तयेयेति C; ०दहवर्त्तयेति G1, G2, J, K. 18 [illegible] C, G1, G2, J, K. 19 य एतैर्द्वि० C.

तस्मान्नापि महासीरिति ।
तस्मा[1]देतेऽहीना इत्यहीना इति ॥ ९ ॥

षष्ठः[2] पटलः

अथातः सत्राणि ।
5 तेषां द्वादशाहः प्रथमः ।
तस्मिन्नुपकृतानि ।
तत्र द्वे उपधिस्थानेऽन्तरेणाति[3]रात्रौ [ च[4] ] दशरात्रं च यत्रैकेनाह्नार्थो भवे[5]तीति ।
व्रतमाह[6]रति, एतदेकार्थे दृष्टमिति ।
10 तस्य तदेव स्थानं यत् संवत्सरे द्व्यहार्थे [ गो[7] ]आयुषी ।
तयोस्तदेव स्थानं यत्संवत्सरे त्र्यहार्थे त्रिकद्रुकाँश्चतुरहार्थे[8] व्रतचतुर्थान् पञ्चाहार्थेऽभिप्लवपञ्चाहँ षडहार्थेऽभिप्लवः सम्प्ल[9]वते ।
एतेन न्यायेनैष एवो[10]त्तरकल्पः क्रमते ।
आचत्वारिँशद्रात्रादुपचीयमानेष्वहस्सु रोहेणोपचयः प्रवर्त्तते ।
15 एतँ रात्रिसत्रन्याय इत्याचक्षते ।
यदेवापवदति तद् व्याख्यास्यामः ।
तत्रास्मिँस्त्रयोदशरात्रे कथं व्यूढसमू[11]हौ ।
समूढः स्यादित्येके ।
समूढो ह्येनँ सर्वस्तोमोऽन्ववैतीति[12] ।
20 व्यूढः स्यादिति गौतमः ।
अनादिष्टः कल्पेन समूढः ।
अथापि छन्दोयोगपर्वणि भागसमाप्तौ चोपधीयते ।
अथापि कृत्स्नोऽयं दशरात्र इति ।
व्यूढमेवैनँ सन्तँ समूढः सर्वस्तोमोऽन्ववैतीति ।
25 अथापि नादेक्ष्य[13]त् सोमसामे[14] गौरीवितस्यां[15]देक्ष्यत् ।
कथं दशमधर्मा मानसमिति ।
अकर्तव्या इत्येके ।

---

1 ०देव ते० C. 2 In B only. 3 ०त्रि० C. 4 Wanting in B. 5 ०वति C, G1, G2, J. 6 ०हरेति C, G2, J; ०हेरति G1. 7 Wanting in B. 8 ०वतः B. 9 अभिप्लवन्या० Cख, G1, G2, J, K. 10 एकोत्त० C, G1, G2, J, K. 11 ०मूहाविति C, J, K; ०मूहादिति G1, G2. 12 ०न्वपै० B. 13 ०क्षत् J. 14 ०सामा G1, G2, J, K. 15 ०तन्नोदे० G1, G2, J; ०नं नादे K.

दशमं च लुब्धश्च दशरात्र इति ।
कर्तव्या इति गौतमः ।
अना[1]कृतेन व्रतेन मानसमा[2]धिनाप्यते ।
अथापि वा[3]चो दश[4]मं मन उपकृतं कृत्स्नोऽयं दशरात्र इति ।
5 चतुर्दशरात्रे पृष्ठ्यं रूढावृत्तं करोति ।
सैषा मध्यावृ[5]त्तिः ।
"यत्रातिरात्रात् पृष्ठ्यमुपयन्ति, प्रथमस्याह्नोऽस्य प्रत्ना[6]नुरूपः" इति अजाम्यर्थः । Ārṣ. K. IX. 1. D.
"अथ खल्वै[7]त्र त्रयस्त्रिंशे अ[8]हनी सन्निपततः ।
10 केनाजामीत्यह्न एव सामान्यात् ।
अपि वा कण्वरथन्तरमनुकल्पयेत् ।
पूर्वस्याह्न आ[9]र्भव उत्तरस्य वा[10] मध्यन्दिने" पृष्ठ्य उत्तरस्य, विषुवत् स्थानीयो व्रतं पञ्चदशरात्रस्य । Ārṣ. K. V. 132 a.
पृष्ठ्य एवोत्तरस्य, तत्राग्निष्टुतमुपदधाति ।
15 सत्रप्राये ब्रह्मस्था[11][12]नेवच्चिकीर्षन् ।
तस्य
३ २ ३ २ ३ १ २ ३
'अग्निः प्रत्नेन जन्मना' इति SV. 2. 1061; cp. RV. 8. 44. 12.
होतुराज्यमजाम्यर्थम् ।
व्याख्याता अन्यतोऽतिरात्राः ॥ १० ॥

20 न्यायकॢप्तमासप्तदशरात्रात् ।
सप्तदशरात्रेऽभिप्लवपञ्चाहः सम्प्लव[13]ते ।
ते खलु स्वतन्त्रा एव त्रिकद्रुकाः स्युरित्येके ।
यावत् षड्[14]कान्नेयुः षडे[15]व सतस्तन्त्राण्या[16]पादयेयुरिति ।
आपादयितव्या[17]ंस्तन्त्राणि मन्ये[18] इति गौतमः ।
25 अहर्गणप्रत्यवायो ह्येवमभविष्यत् ।
त्र्यहाद् द्व्यहम् ।
एवमिव ब्राह्मणं भवति—"अ[19]नन्ता वा एता यत् पञ्चाहविधाः" इति । PB. 23. 11. 2.

---

1 अन्वा० B. 2 ०मप्रविश्याज्यते C; ०मपविश्याय्यते G1, G2, J; ०मविश्याय्यात K. 3 वाचा K. 4 दशमं K. 5 वृत्तस त्रातिरात्र B; वृत्रि० G1, G2, J. 6 प्रत्नामनुरूपः C, G1, G2, J. 7 खलु B. 8 बृहती B. 9 आर्भव C. 10 च G1, G2, J, K. 11 ०नेव० G1, G2, J. 12 ०प्तसमाप्त० G1, G2. 13 ०वेते C; ०वेव G1, G2; ०वेवते J, K. 14 षट्तान्ने० C, G2, J, K; षट्ान्ने० G1. 15 षडेह वसंत० G1, G2, J, K. 16 ०ण्यादायद्यु० G1; ०ण्यापादायद्यु० G2, J. 17 ०व्य० C, G1 G2, J, K. 18 मन्य० C, G1, G2, J, K. 19 अनन्या पञ्चाह एतावत् पञ्चा० B.

अन्ताहह्र्यतः षष्ठमुपैतीति[1] ।
स वै पञ्चाहतन्त्र एवाभविष्यन्न षष्ठात् किञ्चित् प्रत्याहरिष्यदिति ।
प्रत्याहरेदिति गौतमः ।
एवमिव ब्राह्मणं भवति—"पञ्चमेऽहनि षष्ठस्याह्नस्तृतीयसवनं प्रत्याहरति ।" cp. Ārṣ. K. IX. 2 A.
5 षडहाविलोपाय स त्वेव स्तोमो यः पञ्चमस्य ।
सा[2] वा[3] संस्था रथन्तरबृहत्पृष्ठैः[4] ।
"प्रथमस्याह्न[5] एष प्रत्नानुरूपः" इत्यजाम्यर्थः । Ārṣ. K. IX. 1.D; 2. A.
व्यावृत्तये पृष्ठ्याभिप्लवयोः श्यैतनौधसब्रह्मसामा[6] पौष्कलश्रुध्यौष्णिहाः अभीवर्तसुज्ञानयोरन्वपाय संस्थासु ।
10 श्यैतनौधसेऽभीवर्तकारिता हि प्रगाथा इति ।
एतेनैवोत्तरे व्याख्याताः ।
षाष्ठिकानि पञ्चमस्याह्न उक्थानि ।
तत् कुशलमुद्धरति शून्यं[8] द्विपदा अनन्तेनाचिकीर्षीत् ।
15 तत्रैतदैद्धमवाहं नवमादन्तान्वितम्[9] ।
तद्यदे[10]तांसु
'यजिष्ठं त्वा ववृमहे' इति । SV. 1. 112; 2. 763; RV. 8. 19. 3.
एता आपन्नाः पञ्चममहर्भवन्तीति[11] ।
"सौश्रवसं मारुतं वेति" विचारयन्ति ।
20 वैभक्तं सौश्रवसं पाञ्चमिकं मारुतम् ।
अथ यत्राभिप्लवो रात्रिसत्रेषु कथं कल्पविचारितानीति ।
[ अकर्तव्यानीति[12] ] शौचिवृक्षिः[13] ।
नान्यत्र संवत्सरात्[14], न संवत्सरसम्मितासु च, नेति ।
कर्त्तव्यानीति गौतमः ।
25 यावन्ति यावन्त्यभ्यश्नुवीत[15] विहितान्यप्रतिषिद्धानि[16] ।
अथाप्येवमाप्तितरा संवत्सरस्येति ।

---

**1** ०पैति K. **2** स B; मा G1, G2, J, K. **3** Wanting in C, G1, G2, J, K. **4** ०ष्ठाः C, G1, G2, J, K. **5** पञ्चम० C. **6** ०मानाः is suggested. **7** ०ह्नोऽभि० B; ०ह्नोऽभी० K. **8** गूर्दं C; गूर्दं G1, G2, J, K. **9** ०मादन्तान्वितं B; ०मानन्दन्तान्वित G1, G2, J. **10** ०देवता० B. **11** ०वती० B. **12** Wanting in B. **13** शौचिवृक्षि ··· कर्त्तव्यानीति (line 24) wanting in G1, G2, J. **14** ०रानुसं० C. **15** ०वीतेति C. **16** विहि० G1, G2, J.

विं॰शतिरात्रे द्व्यहार्थे सति विश्वजिदभिजितौ करोति ।
कस्य हेतोरिति ।
सम्पूर्णं[1] विराजं॰ सत्रमुपक्रतम् ।
तावेतौ[2] वैराजौ[3] चापि च सम्पूर्णौ स्तोमैः पृष्ठैरिति ।
5 तौ[4] यदत्रैव पृष्ठ्यमात्रौ तौ पृष्ठ्यादनन्तरितावि[6]ति ॥ ११ ॥

पूर्वस्मिन्नेकविं॰शेऽतिरात्रे[7] तृतीयोऽभिप्लव[8] आवृत्तो भवती३ अनावृत्त इति[9] ।
अनावृत्त इति शौचिवृक्षिः[10] ।
न ह्यावृत्तिर्विज्ञा[11]यते[12] ।
10 अथापि [ कथं[13] ॰ ] सप्ताहो विषुवान् स्यात्[13] ।
आवृत्त[14] इति गौतमः ।
रोहप्रत्यवरोहौ सत्रमुपक्रतौ[15] विषुवानिति ।
यद्वेतदनादिष्टावृत्ति[16]रिति, नाभिप्लवस्यावृत्तिः, क्वचनादिश्यतेऽथ एवावर्तयन्ती[17]ति ।
15 यद्वेतत् कथं॰ सप्ताहो विषुवान् स्यादिति, दृश्यते[18], षडहो विषुवत्स्थाने चतुर्दशरात्रे, तथा सप्ताहः[19] सं॰सत्स्विति ।
अथापि यदनावृत्तोऽभविष्यदतिरात्रोऽभिप्लवः, "षडहो[20]ऽतिरात्रः, द्वाविभिप्लवौ[21] षडहावतिरात्रः" इत्यभविष्य[22]दिति । cp. PB. 23. 15. 1; AP. Ś. 23. 3 3.
20 [23]रूढावृत्तावि[23]ति त्वेतौ[24] नानादिशति ।
उक्थ्यान्युत्तर[25]स्मिन् स्वर[26]साम्नो[27] ब्रुवते ।
पृष्ठ्योपधानात्तत्र तान्येव द्विवचनानि[28] यान्येकविं॰शत्यहः[29]कारिणाम् ।
"श्यैतनौधसब्रह्मसामानः स्वरसामानः पौष्कलश्रुध्यौष्णिहाः, विषुवतः साम[30]तृचस्य लोके[31] आभीशवम्[32] ।" Ārṣ. K. IX. 3. C.

---

1 ०र्णां B. 2 तावि० G1, G2, J; ताविमौ K. 3 विराजौ G1, G2. 4 वा पञ्चसूक्तैः स्तो० C; वा पञ्चपूर्णै स्तो० G1, G2, J. 5 Wanting in C. 6 ०न्तरावि० B. 7 ०शतिरात्रे C, G1, G2, J, K. 8 तृतीयेऽभि० C, G1, G2, J, K. 9 ०ति B. 10 ना० G1. 11 ०जा० G1, G2, J. 12 Wanting in B. 13 स्यादिति C, G1, G2, J, K. 14 आवृत्तिरिति B. 15 ०वृतो G1, G2; ०कृतंकृतो K. 16 वृत्ति G1, G2. 17 ०न्तीति B. 18 ०येते G1, G2, J. 19 ०हः सत्स्विति B; ०हः सप्त स० G1, G2, J; ०हः सप्त॰ स० K. 20 ०हो द्विरात्रः C. 21 ०द्वाभि० K. 22 ०ष्यत् B. 23 B adds अति. 24 त्वतो C. 25 ०नुत्तर G1; ०नुत्तर० G2, J, K. 26 स्वर is wanting in G1. 27 साम्ने G1; ०साम्ने G2, J, K. 28 विधनानि C; विवचनानि G1, G2, J, K. 29 ०हका० C, G1, G2, J, K. 30 सामा० G1, G2, J, K. 31 लोका G1, G2, J, K. 32 अभी० B, G1, G2, J.

अभीवर्तापायात्
'श्रायन्त इव सूर्यम्' इति । SV. 1. 267; 2. 669; RV. 8. 99. 5.
"विकर्णमिन्द्रक्रतोरपायात्, न्यायक्लृप्तमा सँसद्भ्यः[1] ।" cp. Ārṣ. K. IX. 3. c, d.

5 सँसत्सु पृष्ठ्यं विषुवत्स्थानीयं करोति ।
अनिरुक्तं च त्रयस्त्रिँशम्[2] ।
तं खलूत्तरस्य त्र्यहस्य स्तोमैरभिविधत्ते वैषुवतीयमत्याधित्सन्[3] ।
"स[4] एष[5] आवृत्तः स्तोमः पूर्वस्त्र्यहः ।
अनुपूर्वस्तोम उत्तरः ।
10 एतं विशाल[:[6] पृष्ठ्य इत्याचक्षते ] ।" Ārṣ. K. V. 136a.
पृष्ठ्यस्तोमं पुरस्ताच्चोपरिष्टाच्च[7] रूढावृत्तमनिरुक्तं[8] सप्तमं मात्रासम्पूरणायैकाहम् ।

तत्रानुष्टुभि बृहत्करोति[9] ।
अजाम्यर्थो[10]ऽथापि व्रतस्थानो भवति ।
15 औपोत्तमादुभयसामव्रतमिति ॥ १२ ॥

न्यायक्लृप्तमा त्रयस्त्रिँशद्रात्रात्[11] ।
तत्तत् पञ्चाहविहितम् ।
तत्[12] कतमो[13]ऽयं पञ्चाह इति ।
पृष्ठ्यस्तोमः पञ्चाहः इति कार्पर्दयः[14] ।
20 अनादेशे कमन्यं प्रतीयाम[15] ।
अथापि यत्र यत्र[16] त्रैकद्रुको भवति आदिशत्येवैनं[17] तत्र [ तत्र[18] ] ।
अथाप्याह—"नानाब्रह्मसामान्युपयन्ति" इति । PB. 24. 1. 14.
एष नानाब्रह्मसामा भवति ।
अथापि दाशरात्रिकैरहोभिः पञ्चाहान्[19] सँवर्णयन्तीति[20] [ पृष्ठ्यस्तोमपञ्चा-
25 हत्वादेव ।
अथाप्याह—"त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति" इति । PB. 23. 3. 9; 24. 3. 4; 25. 3. 5.

---

1 ०सद्यः C. 2 ०श० C, K. 3 वै विषु० C. 4 Wanting in G1, G2, J. 5 एव B. 6 B omits :पृष्ठ्य … ०क्षते. 7 ०ताद्दयोप० J. 8 ०क्तस० B; ०क्ते स० G1, G2, J, K. 9 ०मि B. 10 ०र्थं० G1. 11 ०त्रान्तप० C, G1, G2, J, K. 12 यत् G1, G2, J, K. 13 कर्मो० G1, G2, J, K. 14 कापटवः C, G1, G2, J, K. 15 ०यामः B. 16 य B, G1, G2, J. 17 आदितो वैनं B. 18 Wanting in B, G1, G2, J, K. 19 ०हात् C. 20 ०यति B. 21 B omits पृष्ठ्यस्तोम … सँवर्णयन्ति ( p. 171. 28. ).

त्रिवृत्प्रथमं दाशरात्रिकम् ।
तदेवावृत्तस्योदयनीयं भवति ।
अथापि विश्वजिता जानीमः ।
विश्वजिद् ह्युत[1] पृष्ठ्यां[2]विलोपानन्ववैतीति ।
5 स वै नूनमभ्यासक्तो[3] ह्यहीनेष्वनभ्यासक्तं तु मन्यामहे ।
न हि विज्ञायतेऽभ्यासङ्ग इति ।
"अभिप्लवपञ्चाह इति गौतमः ।" cp. LŚ. 10. 4. 6.
आदिष्टः कल्पेन भवति ।
अथापि न पृष्ठ्यपञ्चाहः कृतः ।
10 अकृतो विश्वजितेन पृष्ठ्यस्तोमपञ्चाहः ।
अभिप्लवपञ्चाहस्तु विद्यते ।
तं कृतवदतिक्रामति ।
अथापि कृत्स्नावेव पृष्ठ्यस्तोमौ नाभिप्रयोगं लभेते[4] ।
कुतो विलुप्तौ लभेयातामिति ।
15 अथापि शश्वदेकेऽध्वर्यवोऽभिप्लवपञ्चाहमादिशन्ति[5] ।
अथापि कालबविनो व्यूहेनादिशन्ति ।
"अतिरात्रो ज्योतिर्गौरायुः पञ्चाहः ।" PB. 24. 5. 1; cp. ĀP. Ś. 23. 6. 2; LŚ. 10. 4. 8.
स द्वितीयः स तृतीयो विश्वजिदतिरात्र इति ।
20 यद्धेतदनादेश इति, आदेशजातिरेषा भवति यदधिकारः ।
यद्धेतद्यत्र यत्र त्रैकद्रुको भवति आदिशत्येवैनं तत्र[6] तत्रेति, पृष्ठ्यस्तोमपञ्चाहो वाऽथादिश्यते, पृष्ठ्यावलम्ब उत्तरे नवरात्रे छन्दो[7]भवति दशरात्र इति ।
यद्धेतत् "नानाब्रह्मसामा[8]न्युपयन्ति" इति, कारणकारित[9]मेतद्भवति । PB. 24. 1. 14.
25
यद्धे[10]तंद्दाशरात्रिकैरहोभिः पञ्चाहा[11]न् सं[12]वर्णयन्तीति, ] सङ्ख्याभिप्राये[13]ण तदाह—
द्वौ पञ्चाहौ दशरात्र इति ।
यद्धेतत् "त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति" इति, PB. 23. 3. 9; 24. 3. 4; 25. 3. 5.
30

1 ०जिध्युतत्पृ० G1, G2, J; ०जित् पृ० K. 2 ०पृष्ठय० J. 3 C adds ऽभ्यासक्तो. 4 नमेते G1, G2, J. 5 ०विश० G1, G2. 6 तंत्र for तत्र तत्रेति in G1, G2, J, K. 7 ०न्दो भ० J. 8 ०साम० B; ०समा० G1. 9 ०रिणमत० G1. 10 ०द्वै० K. 11 हात् C. 12 See p. 170 no. 23. 13 ०प्राय एत० C, G1, G2, J, K.

उत्तम एतं[1]त्त्रयस्त्रिँशद्रात्रेऽभिनन्दो[2]ब्राह्मणं वदति—"त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टात्" इति। Say. PB. 24. 3. 4.

यद्वेतद्विश्वजितां[3] जानीम इति, नेह पृष्ठ्यार्थे[4]न विश्वजिदा[5]गच्छति, विषु[6]वदर्थे[7]नैष आगच्छतीति।

5 "नाना ब्रह्मसामाँन्युपयन्ति" इति। PB. 24. 1. 14.

यद्धि[8] पृष्ठ्योरनु[9]व्यत्ययँ श्यैतनौधसे व्यै[10]त्यहरिष्यद् भूयान् व्यत्यय आकाङ्क्ष्यो[11]ऽभविष्यत्।

प्रतिपदामाज्यानामौष्णिहयोरिति श्यैतनौधसवर्णनानि।

बार्हद्रथन्तरपृष्ठ्याद्यदु विश्वजितं विषुवन्तमितो यद[12]पैति तस्यैतस्मिन्ननुग्रह

10 इति ॥ १३ ॥

---

1 एकस्मि० B. 2 ०नन्दाम ब्रा० B. 3 ०जितान्ता B. 4 ०र्थे G1, G2. 5 ०जिता ग० Cक. 6 विश्वव० G1; विषु is wanting in J. 7 ०म० B. 8 यद्वै C, G1, G2, J. 9 ०नुवृत्ययँ G1, G2. 10 व्यतिहरिष्यत् तदा B. 11 ०क्ष्यो० K. 12 ०दापेति G1, G2, J.

# अथ दशमः प्रपाठकः[1]

‘अग्निर्मूर्धा दिवः ककुत्’ इति SV. 1. 27; 2. 882; RV. 8. 44. 16.
उक्थप्रणये करोति ।
कस्य हेतोरिति ।
सामन्या[2] मूर्धन्वती[3] वैषुवतीये[4]ऽभिरूपा ।
5 तत्रैतत् सत्रासाहीयमापन्नं च विश्वजितम् ।
अपि च वैषुवतीयम्, विषुवत्युभे षोडशिसामनी[5] करोति वैषुवतीयमन्या[6]धित्सन् ।
“उत्तमः पञ्चाह आवृत्तो भवती३ अनावृत्तः” इति तद् व्याख्यातम् ।
Ārṣ. K.V. 138 a.
10 पूर्वस्मिन्[7]नेकविंशतिरात्रे सत्रमास[8] उत्तरम् ।
तत्रैते संमस्य[9] निदधाति ।
एकविंशतिरात्रं च द्वादशाहं च ।
एते[10] नानात्वक्लृप्त इति ।
पञ्चाहक्लृप्तमुत्तमम् ।
15 प्रथमे विषमयुक्ताः[11] पञ्चाहाः ।
तत्[12] पञ्चाहानेव करवाणि ।
एवं पक्षयोः समाधिरिति ।
तत्र कथं बृहद्रथन्तर इति ।
यथालोकमेव ।
20 नहीह तद् ब्राह्मणमिति ।

---

1 In C only. 2 साम्ना B; सामान्या C, G1, G2, J. 3 ऊर्ध्ववती B. 4 वि० G1, G2. 5 ०मानि B; ०मानी G1, G2, J. 6 ०न्वा० is suggested. 7 ससमा० G1, G2, J, K. 8 ०सत C. 9 सा० C. 10 एके B. 11 ०मंन्यु० G1, G2; ०मे यु० J. 12 हन्त C, G1, G2, J, K.

कथमु ब्रह्मसामनीति ।
श्यैतनौधस एव ।
नहीह तद् ब्राह्मणमिति ।
यस्य[1] स्यात् स एवायं पञ्चाह इति ।
5 तथैव तस्य बृहद्रथन्तरे तथा ब्रह्म[2]साम[3]नीति ।
ते चेद्यथालोकबृहद्रथन्तराः प्रथमस्य, प्रथमस्याह्न एष प्रत्नानुरूप इत्यजास्यर्थः ।
यद्यु[4] वा अयथालोकबृहद्रथन्तरा[5]ः प्रथम[6] एव ।
अथोपरिष्टाद्यद्यु[7] ह यथालोकबृहद्रथन्तरा[8]ः उत्त[9]मे, बृहन्निधनं वार्कज[10]म्भमनुकल्पयेत् ।
10 यद्यु वा अयथालोकबृहद्रथन्त[11]रा उत्तम एव ।
अथ खल्वाह—"यद्[12] विश्वजिति छन्दोमानुपयन्ति" इति । PB. 24. 3. 2.
कस्येदं ब्राह्मणꣳ स्यादिति ।
15 षाडहिकानां समस्तानामिति ।
चतुरावृतामिति ।
छन्दसामिति ।
"'त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति' इति । PB. 23. 3. 9; 24. 3. 4.
त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टात्[13]" [14]इति । Sāy. PB. 24. 3. 4.
20 न्यायक्लृप्तमाविधृतिभ्यो न्यायक्लृप्तमाविधृतिभ्यः ॥ १ ॥

[15]सप्तमः पटलः

अथैता विधृतयो भूतानां विधारिण्यः ।
तत्रैतानहर्गणान् करोति ।
त्र्यह[16]ꣳ षडहं दशाहं द्वादशाहमिति ।
25 तानतिरा[17]त्रैर्विधारयति ।
एवꣳ सर्वमेव[18] विधृतं भविष्यतीति ।
कानि तन्त्राणीति ।
दशरात्रस्तोमवि[19]क्लृप्त इत्येके ।

---

1 C, G1, G2, J, K add तु. 2 ब्राह्मणसा० G1, G2; ब्राह्मणस० J. 3 ०मा० B, J, K. 4 यदु B. 5 ०रः B. 6 ०मस्य B. 7 ०द्यदु G1, G2. 8 B adds उत्तमः. 9 उत्तरे C, G1, G2, J; K omits उत्तमे … ०न्तरा (line 11). 10 वाक्ज० B. 11 ०र B. 12 Wanting in G1, G2; य J. 13 B adds त्रय. 14 Wanting in G1, G2, J. 15 In B only. 16 अहꣳ G1, G2, J, K. 17 ०त्रैर्वि० G1, G2, J, K. 18 ०मित B, K. 19 ०संकि० G2, J, K.

ज्योतिष्टोम इति शौचिवृक्षिः ।
अनादेशे कमन्यं प्रतीयाम[1] ।
अथाप्याह—"ज्योतिष्टोमस्याऽयनेन यन्ति" इति । PB. 25. 8. 5.
शतसंवत्सरे ज्योतिष्टोमेन[2] यन्तीति [3]वैतदवोचदिति ।
5 कौसुरुबिन्द इति गौतमः ।
एते[4] कल्पेनादिष्टे भवतः ।
इहोत[5] तदभिरूपतरं यथोच्चा[6]हीने सत्रे ह्येव समासोऽभिरूपतरः ।
यथोच्चा[7]हीन इति ।
व्याख्यातानि सन्धिषामानि ।
10 [8]एवं चेत् सन्धिषाम स्यात् ।
"कौत्सस्य लोक उद्वंशीयम्" । Ārṣ. K. IX. 8. a.
एतेनेडाकामश्च सिध्यत्यजामिकल्पश्चेति ।
तद्यदेतासु
'आ त्वा विशन्त्विन्दवः' इति SV. 1. 197; 2. 1010; RV. 8. 12. 22.
15 एता रात्रेर्वि[9]कृतौ दृष्टा इति, नित्यासु वेति विचारयन्ति ।
अर्थकारितमुद्वंशीयम् ।
स किमर्थो नित्याश्चश्चा[10]वयेदिति ।
पञ्चदशानां दशमस्य नानदं षोडशिसाम ।
एवं छन्दसामनन्तरं यस्तदु सन्धिषामैव भवति ।
20 यथौशनका[11]वे समा[12]चारयिष्यत्—यथा रथन्तरापचित्या रथन्तरं सञ्च[13]रते ।
अथापि कावं तृतीयसवनेन समधि[14]चारयिषीत् ।
तद्वशेनौशनम् ।
तत्रैते वैश्वज्योतिषवासिष्ठेऽपुरस्तात् स्तोमे पदानुस्वारे [15]यथौशनकावे ।
एकविंशेष्वर्कान् करोती[16]त्यन्त[17]पर्यायिणो हि, स यन्न[18]वम[19]प्रभृतिष्वन्तपर्य-
25 यित्वादेव ।
अथाप्येते सप्तमप्रभृतिषु दशरात्रे दृष्टाः, उपपन्नं द्वादशाहे नवमप्रभृतिषु प्रयुज्येरन्निति ।

1 ॰मः C, K. 2 ॰मायनेनं C. 3 नै॰ B. 4 एतेन C. 5 इहो C; इत्यहो G1, G2, J, K. 6 ॰चा॰ C, G1, G2, J, K. 7 ॰चा॰ C, G1, G2, J, K. 8 एडं G1, G2, J; ऐडं K. 9 रात्रैर्विंशतौ G1; रात्रैर्वि॰ G2. 10 ॰वा॰ G1, G2, J. 11 ॰नवाके G1, G2, J. 12 संचा॰ B. 13 ॰रेते G1, G2; ॰रे J. 14 ॰चि॰ B. 15 यथौ॰ C; यथाशनकाते G1, G2, J; यथो॰ K. 16 C, G1, G2, J, K omit ती. 17 ॰र्पयि॰ for ॰पर्ययि॰ in C. 18 यन्नवसम॰ ··· उप is wanting in G1, G2, J. 19 ॰मं प्र॰ K.

कावस्यर्क्षु दीर्घतमसो[1]ऽर्कं एतासां[2]ꣳ स्थानमापन्नो द्वादशेऽहन्युत्सेधनिषेधौ करोति दशमादन्तान्वितौ ।
यमातिरात्रैः[3], स चादित्यानामष्टावतिरात्रान् करोति, अष्टौ यमा आदित्या इति ।
5 आदित्यानां द्वन्द्वदर्शनादभिप्लवातिरात्राणां द्वन्द्वानि करोति ।
अथ खल्वायुष्टोमे[4] चाभिजिति[5] चाजामिकल्पे[6] सौभरं करोति ।
तत्खलु हारिवर्णस्यर्क्षु[7] करोति ।
एतासांꣳ स्थानमापन्नमिति ॥ २ ॥

अथैता आ[8]ञ्जनाभ्य[9]ञ्जनाः प्रजापतीप्सासुपकृताः ।
10 तत्र सर्वस्तोममुपाहरति[10] ।
एषोऽरूढस्तोमतः[11] सꣳस्थातः पृष्ठत इति ।
तद्[12] यत् षड्विꣳशस्थानम्, एवमपर्वविलोप इति ।
उत्तमा[13]भिप्लवावा[14]वृत्तौ भवतः ३ अनावृत्ताविति ।
अनावृत्ताविति शौचिवृक्षिः ।
15 न ह्यावृत्तिर्विज्ञायते ।
अथा[15]स्या मध्ये सर्वस्तोमो मध्यस्थानो विषुवानिति ।
आवृत्ताविति गौतमः ।
प्रतिष्ठाकामस्तत्र एतस्मिन् स्थाने वै[16]तं करिष्यन् भवति ।
नैतदन्यत्र मध्याद्वान्तौ[17]द्वा भवतीति ।
20 यद्ध्येतदनादिष्टावृत्तिरिति, नाभिप्लवस्यावृत्तिः, क्व च नादिश्यतेऽर्थं एवा[18]वर्तयतीति ।
यद्ध्येतदमध्ये सर्व[19]स्तोम इति, अपर्वविलोपायैतद् भवति ।
पश्यामश्चामध्ये विषुवन्तं यथा त्रयोदशरात्रे सꣳसत्स्विति ।
"संवत्सरसम्मितासु प्रायणीये चतुर्विꣳशं प्रतिषिध्य[20] त्रिवृ[21]देव कार्य[22]म्"
25 इत्याह । cp. PB. 24. 14. 2; LŚ. 10. 5. 1.
"निष्पन्नचोदितत्वादेतदपूर्वं प्रायणीयं चेति ।
स्तोमविकारमेके ।" cp. LŚ. 10. 5. 2.

---

1 ०सो हि G1, G2. 2 C, G1, G2, J, K add हि. 3 ०त्रास्वादि० C, G1, G2, J, K. 4 ०स्तोमे C, G1, G2, J, K. 5 ह्यभि० C; ध्यभि० G1, G2, J, K. 6 वा० C, G1. 7 ०स्यर्के B. 8 अ० B. 9 ०म्या० G1, G2. 10 ०पहारायेति C; ०पहाराति G1, G2, J, K. 11 ०मक B. 12 तं B, K. 13 ०माव-भि० C, G1, G2, J, K. 14 G1, G2, J omit वा. 15 ०प्यम० C. 16 वृतं B; कृतं C. 17 ०न्तो C; ०न्ता G1, G2, J, K. 18 वा० G1, J, K. 19 G1, G2 omit सर्वस्तोम ··· ०मध्ये. 20 ०ध्यत् C, G1, G2. 21 C adds तं. 22 J omits कार्यं ··· त्वेव ( p. 177. 1 ).

तस्यैवाधिकाराच्चतुर्विंशं त्वेव कार्यमिति[1] निष्ठा।
तथाहि ब्राह्मणम्—ता[2] एताः संवत्सराप्तिमुपकृताः, तत्र यदेतान्यहान्यैव[3]ं
संवत्सरस्य प्रयुक्ततमान्यहानि[4] भविष्यन्तीति।
तृतीयेऽभिप्लव इषोवृधीयं समन्ते कुर्या३न्न[5] कुर्या३दिति।
5 न कुर्यादित्याहुः।
पृष्ठ्यसान्निपातिके इमे भवतः।
न चेह पृष्ठ्यो भवतीति।
कुर्यादित्यपरम्।
नानापर्वणोरिमे सन्तानार्थे[8] भवतः।
10 नानापर्वतरे चैतेऽहर्गणश्चैकाहश्च[10]।
भूयसा चैत्र[11]ं सांवत्सरिकाणां द्रव्याणामभिप्रयोगो भवति।
अथाप्यत्र विश्वजिदभिजित्संनिपातो[12] भवति।
एतौ च पृष्ठ्यसंदशाविति।
"आवृत्तेऽभिप्लवे कतमत् सन्तनि कुर्यादिति।" cp. LŚ. 10. 5. 4, 6.
15 "यण्वमित्येके।" cp. LŚ. 10. 5. 7.
एतदेकार्थं दृष्टम्।
अथाप्येतदेषामावृत्तानामन्ते भवति मध्योद्वा[13]यमिदं सत्रमिति।
अपत्यमित्यपरम्।
एवं पुरस्ताच्छन्दोमानां द्विष्प्रयुक्तानि भवन्ति।
20 सन्तनीत्यपरम्।
एतदेषामा[14]द्यं भवति।
असम्प्राप्तेरन्ततो लोपः।
शाक्करवर्णमित्यपरम्।
एतदेषामकृतं भवति।
25 अथाप्येवं [ सम्प्राप्येयं[15] ] भूयः सांवत्सरिकं द्रव्यमनुगृह्यत इति ॥ ३ ॥
प्रजापतिकामसत्रमुत्तरम्।
तत्र नवाहान् करोति, न्यूना[16]न् प्रजापतिरिति।
षडभिप्लवस्य सत्रस्येदं स्थानम्।

1 ०मिद्दनिष्पक्षमुंति G1, G2. 2 एता G1, G2, J. 3 ०वान्य० G1, G2, J. K. 4 प्रमु० J. 5 ०न्यभ० G1, G2. 6 ०धीये स० C, K; ०द्धिये स० G1, G2, J. 7 B adds अय्याम्न. 8 ०र्थो J. 9 ०र्वणोरेवैते० C. 10 ०क्षैहाह० K. 11 ०विप्र० C, G1, G2, J, K. 12 ०जियत्स० G1, G2, J; ०जिघत्स० K. 13 ०द्व० B, G1, G2, J. 14 ०मघ G1, G2, J. 15 Wanting in B; ०यः G1, G2: ०य J. 16 ०त् C.

स चाभिप्[1]लवतामनतिचिक्रमिषन्नेतानेव षडहान् संव्यू[2]ह्य चतुरो नवाहान् करोति ।

अथ खल्वत्र भाग[3]स्तोमान् करोति, ए[4]तेऽयने दृष्टा इति ।

तेषां यदेवंविधः संस्थायोगः, एवमुभे रूपे षडहरूपं च [क[5]कुब्रूपं च]।

5 अथाप्येवं तावत्यः संस्था यथा षण्णामभिप्लवानामिति ।

"उद्धरत्यर्के यो विधृतिषु" दशरात्रे ह्यर्कान् करिष्यन् भवति । Ārṣ. K. IX. 10. d.

"राथन्तरेणाह्ना त्रिवृतः प्रतिपद्य[6]ते ।

बार्हतेन पञ्चदशान्, राथन्तरेण सप्तदशान्, बार्हतेनैकविंशान्" अन्यवे-

10 तान्[7] नवाहा[8]न् । Ārṣ. K. IX. 10. d.

तत्र व्यत्यासः, कुशलेनोपपद्यत इति ।

प्रतिष्ठाकामसत्रमुत्तरम् ।

तदाञ्जनाभ्यञ्जनाभि[9]र्व्याख्यातम् ।

न्यायकृतमे[10]कंषष्टिरात्रात् ।

15 "अथै[11]कंषष्टिरात्रं संवत्सरसम्मितास्थानमेव ।" Āp. Ś. 23. 8. 8.

तत्र नवा[12]हमभितः पृष्ठ्यौ करोति ।

एवं स[13]र्वं सांवत्सरिकं द्रव्यम[14]नुगृह्यत इति ॥ ४ ॥

अथ केनासंस्तीर्णान्यभिविदधीतेति ।

रा[15]त्रसत्रन्यायेनेत्याहुः ।

20 यथा शतरात्रमिति ।

अपि वा दशरात्रम् ।

व्रतं चा[16]न्ते निधा[17]यैं सांवत्सरिकाणामह्नां समविभा[18]गः सिध्येत् ।

तथा कल्पं कुर्वीत ।

"यथा संवत्सरसम्मितासु ।" LŚ. 10. 5. 1.

25 अपि वा यत्र भागस्तोमानां समविभागः सिध्येत्, त[19]था कल्पं कुर्वीत, यथा सवितुः ककुप्सु ।

ज्योतिष्टोमेन वै[20]षं:, ऊनस्य पूरयितेति ।

---

1 चतुरभि० C, G1, G2, J, K. 2 संव्यु० C, K; स० G1, G2, J. 3 भागाः स्तो० K. 4 एते या न C, G1, G2, J, K. 5 B omits ककुब्० च. 6 ०न्ते B, G1, J. 7 ०पेतान् B. 8 नवाह्नः G1, G2, J, K. 9 ०नानिव्या० B. 10 ०ष्ठमै० B; ०षंमै० G1, G2, J. 11 अथैतदेक० C, G1, G2, J, K. 12 नव्य० G1, G2, J; नव्यम० K. 13 सर्वा B. 14 ०मुपगृ० J. 15 रात्रि० G1, G2; रात्र ··· चान्ते wanting in K. 16 चते G1, G2; चाते J. 17 ०यत्र G1, G2; ०य यत्र J, K. 18 समवहारः B, C, J, K. 19 तस्य C. 20 वैमान० B.

अथ[1] प्रायणीयोदयनीययो[2]रतिरात्रयोरादिशति ।
एकत्र षोडशिनं नैकत्र[3] ।
तत्र[4] कथꣳ स्यात् षोडशीति ।
यथा विराट् सम्पदꣳ[5] सम्पत्स्यमानां[6] मन्येत[7], तथा कल्पं कुर्वीत यथा[8] संवत्सरसम्मितासु ।
अपि वा यत्र भागस्तोमानां संविभागः सिध्येत् ।
[ द्वा[9]दशाहस्य च गवामयनस्य ] सं[10] विराट्सम्पदꣳ षोडश्युपकृतः ।
अथानुपपद्यमानायां प्र[11]कृतौ[12] निर्णीय यथा मन्येत तथा सꣳशयेषु प्रतिपादयेत् ।
तेषां[13] यानि[14] रात्रिसत्रन्यायेन वर्तन्ते[15] षोडशिमन्तौ तत्र, यथा द्वा[16]दशाहे ।
अथ यत्र रोहप्रत्यवरोहौ सत्र[17]मुपकृतमषोडशिकौ तत्र, यथा गवामयने ।
यत्रानुमध्यꣳ षोडशी[18] दृश्येता[19]षोडशिकौ तत्र[20] ।
यत्रो[21] न दृश्येत षोडशिमन्तौ तत्र सत्रकामस्य[22] ।
अथापि[23] वा चतुष्टोमेष्वषोडशिकौ सर्वस्तोमेषु षोडशिमन्ताविति ⌜ षोडशिमन्ताविति[24] ] ॥५॥

अष्टमः[25] पटलः

अथातः सांवत्सरिकाणि ।
तेषां यद् गवामयनेन सामेति व्याख्यातम् ।
तद्य[26]दपवदति व्या[27]वृत्त्यर्थं[28] वा तत् ।
अपि वा[29] ब्राह्मणेनैव कारणं वदति ।
तत्रादित्यानामयनं[30]मुद्भिद्वलभिदौ मात्रासम्पूरणाय करोति ।
तत्रैक इन्द्रक्रता[31]वुत्सेधनिषेधौ कुर्वन्ति ।
एष औत्तरपा[32]क्षिक इति ।

---

1 अथा G1, G2, J. 2 ०णीययो० G1, G2, J. 3 चै० G1, G2; से० J. 4 तत् C; wanting in G1, G2, J. 5 G1, G2 omit सम्पदꣳ. 6 ०नान् B; ०नाना G1, G2; ०ना J. 7 ०न्योत C. 8 C, G1, G2, J, K omit यथा … सिध्येत्. 9 B omits द्वादशाहस्य … ०नस्य. 10 Wanting in C, G1, G2, J, K. 11 प्रा० G1, G2. 12 ०तौ J. 13 येषां० G1, G2, J. 14 वा B. 15 ०ते B. 16 B adds च. 17 सत्रिरपकृताषोडशिनस्त० B. 18 षोडशी दृश्येता is wanting in C, J. 19 ०तꣳ षो० G1; ०ताꣳ षो० G2, K. 20 यत्र C. 21 यथा B. 22 तत्र कात्स्न्याय C; सत्रकात्स्न्याय G1, G2, J. 23 अपि C, G1, G2, J. 24 Wanting in B. 25 In B only. 26 तद्प० G1, G2, J. 27 व्यावृत्त्यर्थं … वदति। त is wanting in G1; वावृध्य० G2, J. 28 ०र्थे C. 29 Wanting in C, G2, J, K. 30 ०न उ० C, G1, G2, J, K. 31 ०माबु० B. 32 ०प० B, G1, G2, J, K.

इत्यत्र द्वौ द्वौ पादावुक्त्वा विरम्य पुनर्द्वौ पादावुक्त्वाऽथैकं पादं ब्रूयात् । पाठस्तु

"अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु ।

उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ।

सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥" इति । ibid.

अथापि द्वावुक्त्वाऽथैकमथ द्वौ—

"तव त्यन्नर्यं नृतः" इति । SV. 1. 466; RV. 2. 22. 4.

अथापि पञ्चपदान्तरे—

"तव त्यन्नर्यं नृतः" ibid.

इत्यत्र द्वौ पादावधीत्याथैकं पादमुक्त्वाथ द्वौ पादौ ब्रूयात् ।

षट्पदायां द्वयोर्द्वयोरवसानम्—

"उभे यदिन्द्र रोदसी" इति । SV. 1. 379; 2. 440; RV. 10. 134. 1; PB. 13. 10. 3.

स्पष्टम् ।

[अथापि त्रिषु—

"अपि वृश्च पुराणवत्" इति ।] RV. 8. 40. 6.

सप्तपदायां त्रीनुक्त्वा द्वौ द्वौ परौ—

"अग्निं होतारं मन्य दास्वन्तम्" इति । SV. 1. 465; 2. 1163; RV. 1. 127. 1.

सप्तपदायामृचि त्रीन् पादानुक्त्वा विरम्य पश्चाच्चतुरः पादान् द्वौ द्वौ ब्रूयात् ।

उदाहरणम्—

"अग्निं होतारम्" इति । ibid.

अथापि द्वौ द्वावथ त्रीन्—

"प्रो ष्वस्मै पुरोरथम्" इति । SV. 2. 1151; RV. 10. 133. 1.

अथापि सप्तपदान्तरे—

"प्रो ष्वस्मै" ibid.

इत्यत्र द्वौ द्वौ पादावुक्त्वा, अथ त्रीन् पादान् ब्रूयात् । स एष समासः । आष्टपदताया इति, उक्ताष्टपादानामृचां त्र्यद्व्यन्तमवसानं नियतं न...के (?) । अथ तर्हि यत्र क्वाप्यनियमेनावसितव्यम् । नेत्याह—

**तत्र मध्य एव पादस्य नावस्येदिति ।**

तत्र मध्य एव पादस्य पदस्य वा नावस्येत्, अवसानं न कुर्यात्। ननु पदान्ते यत्र क्काप्यवसानं स्यादित्यतिप्रसङ्गमाशङ्क्याह—

**अर्थाभिप्रापणान् न्यूनीभावोऽर्थाभिप्रापणादतिरेक इति ।**

अर्थाभिप्रापणं वाक्यार्थावगतिः। ल्यब्लोपे पञ्चमी। वाक्यावगतिमपेक्ष्य न्यूनीभावमवसानस्य शैघ्र्यमतिरेको दैर्घ्यं च भवति। ननु गायत्र्यादिषु तासां पादेषु च तत्र तत्रोक्तपरिमाणान्न्यूनता दृश्यते। ततः कुत इत्यत आह—

**अथ यत्रैतदक्षरमागच्छति नामिति वामिति वा तद्गहितोनीकरोतीति ।**

अथशब्दो न्यूनीभावप्रारम्भार्थः। यत्र पादावसानेष्वेतदक्षरं नामिति वामिति आगच्छति, इत्यवधारणार्थम्, तत्र तत्रोनीकरोत्येव पादम्। यथा—

२र ३ १ २
"नभन्तामन्यकेषाम्"इति SV. 2. 1151–1153; RV. 10. 133. 36.

न्यूनीभावहेतून् सन्धीन् तदभावेऽन्यूनतां च दर्शयति—

**एकाक्षरभाविनो वा सन्धय इति ।**

एकाक्षरं भवितुं शीलमेषामित्येकाक्षरभाविनः सन्ध्यक्षराणि खलु द्वे द्वे अक्षरे एकमक्षरं भूत्वा वर्तन्ते। अतः छन्दस्यक्षरलोपो विकर्षे तु न लोप इति भावः। तत्रोपष्टम्भकप्रमाणं दर्शयति—

**तदप्येतौ श्लोकौ भवतः—**

**चत्वारि सन्धिजातानि यैः श्लोको ह्रसते नच ।**
**प्रश्लिष्टमभिनिहितं क्षिप्रसन्धिरभिध्रुवम् ॥**
**एतानि सन्धिजातानि मिमानश्छन्दसोऽक्षरैः ।**
**द्वैधं कुर्यादसम्पूर्णे सम्पूर्णे किञ्चनेङ्गयेत् ॥ इति ।**

सन्धिजातानि चत्वारि, तान्येव दर्शयति—प्रश्लिष्टमित्यादि। प्रश्लिष्टं प्रश्लेषयुक्तमक्षरम् "ऋचि प्रश्लिष्टाः स्वरसन्धयः।" (Ph. p. 88. 2)

इति फुल्लकारैरुक्तमुदाहृतं गुणवृद्धिसवर्णदीर्घरूपम्, अभिनिहितं समयेऽप्याभिमुख्येन हृतमस्थितम्, पूर्वरूपापरलक्षणा क्षिप्रसन्धिः। अभिध्रुवश्चायवान्तसन्धिः। भूयांस्तु विशेषः। पदकाले विकर्षो यत्र सा क्षिप्रसन्धिः। यथा—

१ २३ १ २ ३१ २र ३ १ २
"त्वामग्ने पुष्करादध्यथर्वा निरमन्थत।" इति। SV. 1. 9; RV. 6. 16. 13.

आदौ यथा पदकाले यत्र न विकर्षः सोऽभिध्रुवम् । यथा—

"भरद्वाजे समिधानो यविष्ठ्य" इति । SV. 1. 37; RV. 6. 48. 7.

एवमादावक्षरैश्छन्दसो मिमानः माता असम्पूर्णे छन्दोद्वैधं कुर्यादिति विकर्षेण गणयेत्, सम्पूर्णे सति किमप्यक्षरं न गणयेन्न चालयेदिति। छन्दोविचितिज्ञानस्य फलं दर्शयति—

**छन्दसां विचयं जानन् यः शरीराद्विमुच्यते ।**
**छन्दसामेति सालोक्यमानन्त्यायाश्नुते श्रियमिति श्रियमिति ॥**

द्विरुक्तिः पटलसमाप्त्यर्था ।

इति निदानवृत्तौ द्वितीयः पटलः

---

# INDEX OF METRES

# INDEX OF SAMANS

---

# INDEX OF SACRIFICES

Star-marked names are not given in the Nidān-Sūtra, but some of them are discussed though unnamed. They are given here as they help in understanding the rites given by the Nidāna-Sūtra The numbers in the following refer to Prapāṭhaka and Khaṇḍa.

---

# INDEX OF RITUALISTS

[ एके, आचार्याः etc. are not included in the Index ]

## आथर्वणिकाः

अथापि शश्वदेना अनुपसृष्टा आथर्वणिका अधीयते । ३९. २

## ऐतरेयिणः

अपि चैवं रहस्यब्राह्मणे दर्शयति—ज्योतिष्प्रायणो ज्योतिरुदयनः षडहोऽभिप्लव इति चैतरेयिणाम् । ८१. १८.

## औपमन्यवः

नैषा सर्वस्मिन् दशरात्र उपपद्यत इत्यौपमन्यवः । ७५. १७

## कापटवः

नास्य भूयान् दशमेनाह्ना सम्बन्धो यथो च प्रथमेनेति कापटवः । ७२. २१

## कापर्दयः

पृष्ठ्यस्तोमः पञ्चाह इति कापर्दयः । १७०. १९

## कालबविनः

अथ कालबविनो यथासमाम्नायमेव कुर्वन्ति । १०२. १४

अथापि कालबविनो व्यूहेनादिशन्ति । १७१. १६

चतुरस्तृचैकर्चान् व्यत्यासेन कालबविनः । ९९. २

## कौत्सः

अहरिति कौत्सः । ३४. १८

कृता राथन्तरीडा कृता बार्हतीति कौत्सः । ५७. १९

जनित्रे एवानुकल्पयेदिति कौत्सः । १४६. ११

समसितव्यास्त्रिष्टुब्जगतीर्मन्य इति कौत्सः । ९०. ११

## गौतमः

अत्रापि सतोबृहत्यतिशेष॰ समाप्येत्येव गौतमः । ८३. २२

अभिप्लवपञ्चाह इति गौतमः । १७१. ७

अरुणायां कृष्ण्यामुदवसानीयाभिरिष्टिभिर्यजेरन्निति गौतमः । १८५. १६

अस्तीति गौतमः । २१. १०

"आच्छदिषो व्यूहनाच्छ्वोभूत एनामूर्ध्वाग्रैः कुशैर्वेष्टयित्वैवंजातीयेनैवोर्द्धदशेन वसनेन प्रदक्षिणं परिवेष्टय च स्पृष्टोऽनपश्रित उद्गायेत् ।" इति गौतमः । १८. २-४

आपादयितव्या॰स्तन्त्राणि मन्य इति गौतमः । १६७. २४

आवृत्त इति गौतमः । १६९. ११

आवृत्ताविति गौतमः । १७६. १७

आवृत्ते पृष्ठ्येऽभीवर्तलोके सामानि प्रतिकल्पयेदिति गौतमः । ९०. १३

**राणायणीपुत्रः**

शम्बूपुत्रौ नात्र च नेति राणायणीपुत्रः । १५२. २१

**लामकायनः**

अनवधारितकाम इति लामकायनः । १३२. २२

उभयं भवतीति लामकायनः, उभयथा ब्राह्मणं भवति । १६५. १

ऋगक्षर इति लामकायनः । ६०. ३

एतासु कुर्यादिति लामकायनः । ११९. ८

नवपदाः पुरा बभूवुरिति लामकायनः । ६२. १८

स प्रायत्रिकाहौ व्याविवर्तयिषन्नेतस्मिन् तदेकवि ंशे पराक्रम्य त्रिकेण वज्रेण बलं बिभेदिति लामकायनः । १२५. ७, ८

**वदनायनः**

तद्यथाश्वत्थलो वृक्षो नैवाश्वत्थ इति वदनायनः । १६५. १०

**वसिष्ठः**

तपोऽतप्यत रथन्तरमुत्तरयोरिति वसिष्ठः । २३. ३

**वार्षगण्यः**

ऊधसोऽभ्यासब्राह्मणं मन्य इति वार्षगण्यः । ६२. ५

एतच्छातशूर्पो वार्षगण्य आसाञ्चक्रे । ७६. २०

चतुर्थमेवानुगानं तृचे स्यादिति वार्षगण्यः । १०४. २४

निधनब्राह्मणमेवाहमिदं मन्य इति वार्षगण्यः । ३४. २४

प्रथमायामिति वार्षगण्यः । ३३. २१

याथाकामी पथ्यानां दक्षिणावतामिति वार्षगण्यः । ९६. ६

**शाकपूणिः**

तासु विवदन्ते—ऐन्द्र्यः प्राजापत्यः सार्पराज्यश्चान्द्रमस्यः सौर्य इति शाकपूणिः । ७३. ५, ६

**शाट्यायनिनः**

अभ्यास्यायामेकर्चौ, अद एकस्यां प्रथमायाम्, अदस्तिसृषु परासु, अदस्तिसृषु पूर्वासु, अदोऽभ्यास्यायामिति शाट्यायनिनः । ९९. ३, ४

**शाण्डिल्यः**

अथ षोडशिनि सर्वैव चतुस्त्रिंशदक्षरेति शाण्डिल्यः । ४८. २१

अथातिरात्रे सर्वैव द्वात्रिंशदक्षरेति शाण्डिल्यः । ४९. २

अथैतौ विश्वजिदभिजितौ पृष्ठ्यपृष्ठ्यस्तोमयोरन्तस्य वेति शाण्डिल्यः । ९९. १३

आग्निष्टोमीं प्रथमां मन्य इति शाण्डिल्यः । ४३. २

उच्चावचदृष्टीनीति शाण्डिल्यः । २५. ६

( शाण्डिलम् )



शाण्डिल्यायनः



( शाण्डिल्यायनीयम् )

### शुङ्गाः



### शौचादिरेयः



### शौचिवृक्षाः



### शौचिवृक्षिः



### MISC.



---

# INDEX OF WORKS QUOTED BY NAME



---